## (प्रथमः परिच्छेदः)

''ठण्'' ''ठण्'' ''ठण्'' अनतिदूर इव प्रहण्यमानायाः कांस्यघण्टायाः कर्णपीडकेन शब्देन तीव्रतन्द्रायाः समाकृष्टा बन्दिनी चेन्नम्मा स्वे लोचने।

व्यापारयामास ते पश्चिमाशाभिमुखस्य क्षुद्रस्य वातायनस्य... जिज्ञासयेव समयस्य ।

अवलोकयामास निरभ्रं नभः अरत्निमात्रं.....दिव्येनेव.... कदाचिदप्य-दृष्टपूर्वेणेव....सायंसन्ध्याप्रकाशेनारक्तीकृतम् ।

उत्थापयामास महता कष्टेन स्वं जीर्णज्वरजर्जरं कलेवरं कठिनाया मलिनाया धराशय्यायाः ।

प्रेरयामास च तच्छनैः शनैस्तदभिमुखम् ।

धृत्वा वातायनलोहशलाकाः शीर्णाभ्यां कम्पमानाभ्यां हस्ताभ्यां, बहिर्वातायनात् सायंसन्ध्याप्रकाशशोभां प्रातिभासिकीमिव मनोहारिणीं निर्निमेषं पिबन्त्यास्तस्याः श्रान्ता सन्तप्ता दृष्टिः, क्षणमात्रानन्तरं, विश्रान्ता नु सन्तृप्ता नु बभूव, लुप्तच्छविः अपगतज्ञप्तिश्च प्रभ्रष्टोपलब्धद्युतिर्नु।

'न....मया कदाचिदपि पूर्वमवलोकितः एतादृशो दिनकरः समुत्तप्त-काञ्चनभासुरः .... कुर्वन् पश्चिमाशावधूमुखं व्रीडाऽऽरक्तमिव, दिगन्तप्रसृतं पचेलिमगोधूमक्षेत्रं सौवर्णरससिक्तमिव, क्षितिजदृश्यं वृक्षस्तोमं मरकत-मणिमयमिव'-अस्फुटमुवाच सा ... अन्तःप्रविशत्कदुष्णसायंसमीर-स्पृश्यमानलुलितालका ।

'न....कदाचिदपि?'

'न....न....अवलोकित एव एकदा'-सहसा आह सा अस्फुटाक्षरम्।

'कदा....नु....खल्ववलोकितः ?' जागरयन्तीव स्वां स्मृति पप्रच्छ

साऽऽत्मानमेव अवलोकन्त्यपि अनवलोकयन्तीव पुरस्ततं निसर्गश्रिय-स्तद्वैभवम् ।

'तदा....तदा' - सहसा चोज्जगादापरस्मिन्नेव क्षणे ..... विमाचितेव बैलहोङ्गलदुर्गस्य तस्मात् काराकक्षात् निवातात् शून्यशून्यात् घनान्धकारात् ....ऊढेवातीतगर्तविलुप्ते व्यतीतजीवनकाले पुनरप्येकवारं नियत्या सर्वतन्त्रस्वतन्त्रया प्रस्फुटितसलज्जस्मितमनोहरवदनकमला विकसन्नेत्रा .... 'यदा....यदा मम .... मल्लसूर्यः ......'

'मल्लसूर्यः'....अयम् ? .... अयम् ? ..... अयं महाप्रमाणो युवा....मल्लसूर्यः? .... अयं आकर्षको युवा.....स कित्तूरनरेशः? .... यः स्वेनातुलितेन बलेनाप्रतिमेन चातुर्येणाद्वितीयेन विवेकेन च समस्तस्य दक्षिणापथस्य.....समस्तस्य भारतवर्षस्य ..... सञ्जातोऽस्ति आशास्थानम् ?- व्यस्मयत चेन्ना निरुद्धश्वासा विस्मयविस्फारितलोचना विस्मृतविवादा.... चित्रलिखितेव निश्चिता....समाकर्ण्य पृष्ठतः सद्यः समुपस्मृतायाः स्वसेविकाया अस्फुटमाश्चर्योद्गारम् ।

अप्रतीता स्वकर्णयोः अपरावर्तितनेत्रभ्रमरैव तस्य गौराद् वदनकमलात् ..... पप्रच्छ तां मन्द्रस्वरं 'कोऽयम्' इति....विस्मरन्तीत्सरुन्यस्तं स्वं दक्षिणं हस्तम् ।

'मल्लसूर्योऽयं' - सहसा प्रत्युवाच स युवा.... निध्यायन् तां गुणरमणीयभावाभ्यां नेत्राभ्यां....सद्यः प्रसृतमृदुलस्मितमनोहरतरमुखमुद्रः, पर्णान्तरालप्रविशत्तरलतरपश्चिमाशाचुम्बिरविकरसंस्पृश्यमानतरलः,.... कित्तूरवासः, .... धृष्टः ..... अप्रतिमलावण्यया युवत्याऽपरिचितया कयाचित् एकेनैव शरेण निहतपूर्वं नरभक्षकमिमं शार्दूलं पश्चात् स्वेन शरेण पुनर्निहत्य.....हतघातकोऽपि....प्रगल्भायमानोऽयं अहंवादी मल्लसूर्यः ।

'....न....न,....प्रगल्भोऽहम्, ....न तु मिथ्यावादी सहसाऽऽह

सः अनुमाय तां तद्वचनप्रतिवादोद्यताम्,....'पश्यतु भवती .... (अङ्गुल्या विनिर्दिशन्) ....अहं भवन्नामाङ्कितः शरः अस्य भीषणस्य श्वापदस्य हृद्देशे दृढमापुङ्खं निमग्नः .... एव व्यनक्ति यदनेनैव सिद्धहस्तधनुर्धर-व्यापारितेन एतत्प्राणापहारिणा भाव्यम् - इति, .... अयं च....(सकुत्सं) मन्नामाङ्कितः जङ्घायामस्य .... आशल्यं प्रविष्टः .... अनेनैतत्क्षत-मात्रकारिणेति ।'

'तत् ..... क्षन्तव्योऽयं धृष्टो ..... मौर्ख्यात् प्रगल्भायमानो .... नेयश्चायं क्रोशपञ्चकाधिकविस्तृतप्रदेशातङ्ककारी नरभक्षको महान् श्वापदः ....स्वपराक्रमाधिकारार्जितः ।'

वदन्नेवेत्थं स वृषस्कन्धो युवा उच्चखान शरं स्वं मृतश्वापदजङ्घाया, अन्वमन्यत च तां तेन सह ततो गन्तुम् ।

अन्वमन्यत वाचा, .... न तु दृशा ।

सा हि गूढ-रमणीयतरभावाऽभ्यर्थयामास इव तां न ततो गन्तुम्।

चेन्नापि....प्राप्तप्राप्तव्या...प्रेष्यया प्राप्तप्रायत्वाद्दिवसावसानकालस्य सस्मितं मन्दस्वरं वारं वारं नुद्यमानाऽपि....न इयेष ततो गन्तुम् .... अनुज्ञाताऽपि तेन गमनाय,....अननुज्ञातमिवात्मानममन्यत, .... अननुज्ञातमेव च ततो गच्छन्तमुद्वर्त्तनदोषदूष्यम् ।

निमग्नैव चाननुभूतपूर्वपरस्परविरोधिभावनाऽऽवर्ते गम्भीरे, ....असमर्थैव किञ्चिदपि विचारयितुं तोलयितुं निर्धारयितुं,....आकाङ्क्षन्तीवात्मानं ततोऽन्यत्र गतं तथैव च स्थित,....भूतलनिबद्धदृष्टिः, साध्वसजडमतिः, प्रकम्पमानशरीर-यष्टिः .... चिरादिव....अचिरादिव....अशृणोत् तामेवापरिचितामपि चिरपरिचितामिव समुत्तेजिकामपि समाश्वासिकामिव वाचं मेघस्तनितगम्भीरां सम्बोधयन्तीं तामेव ।

‘....अतिक्रान्ता, सुतनु, सायंवेला स्वप्नरमणीया ....प्राप्तप्राया च निशा, .... तत् प्रतिनिवर्ततां स्वं गृहम् ।’

सम्बोध्य चैवं तेन करतलध्वनिमात्रेण पुर आहूतं समादिष्टं प्रज्वलदलातसनाथहस्तं सभल्लं सैनिकं कञ्चिदनुसरन्ती ततः प्रतिन्यवर्तत स्वं काकटिग्रामं निम्नोन्नतेन तृण्यदुर्गमेन नृत्यच्छायेन विपथेन....पुत्तलिकेव।

प्रतिपदक्षेपमिच्छन्त्यपि च परावर्तितुं स्वं लुलितचूर्णकुन्तलं प्रस्वेदक्लिन्नमारक्तं वदनकमलं पातुं च सकृदेव....प्रज्वलदनेकालातप्रकाशितं समुज्वलवेषं प्रस्फुरद्ग्रैवेयकं राजतेजोभासुरं....अधोऽवतीर्णमिव कञ्चिद्दिव्यं पुरुषं....तं तं....युवानं....तामेव दृष्ट्या एकाग्रया ध्यायन्तं.... चिरपिपासिताभ्यामिव....नेत्रचषकाभ्यां....न शशाक तथा कर्तुम् ।

न च शशाक तं विस्मर्तुं क्षणमपि,....घटिकामात्रेण ग्रामं स्वं प्रतिनिवृत्तापि,....गृहं स्वं सायन्दीपप्रकाशितं सायम्पूजास्तवमुखरं प्रविष्टाऽपि, ....जनकेन वृद्धेन वत्सलेन चिरायितां तामवेक्ष्य चिन्ताऽऽतुरेण सकृत् पृष्टाऽपि,....प्रक्षाल्य हस्तपादं कुलदेवताचरणयोर्विनताऽपि,....विज्ञाय सेवकमुखात् ‘व्यापादितो नरभक्षक’ इति समुपजाताश्वासेन जनकेन वारंवारं पृष्टाऽपि,....तज्जिज्ञासाप्रशमनप्रवृत्ताऽपि,....रात्रिभोजनव्यापृताऽपि निमित्तीकृत्य मृगयापरिश्रमं घोरं समयाद्दैनन्दिनात् पूर्वमेव शयनकक्षं स्वं निवृत्ताऽपि,....शतदलकोमलायां शय्यायां सुधाधवलप्रच्छदायां निपतिताऽपि।

न च शशाक लब्धुं निमीलितनयनेन्दीवराऽपि निद्राम् ।

प्रत्युत,....यथा यथाऽजरत् सा निशा,....न्यमज्जन्निद्राम्बुधौ सा वसतिः,....प्रगाढा चाभवन्नीरवता....तथा तथा सा स्पष्टतरमेवाऽऽरभव स्मर्तुं तं व्यतीतं घटनाक्रममप्रत्याशितम् ।

आरभत स्मर्तुं कथं खलु सा-स्वभावत एव मृगयाप्रिया....समाकर्ण्य

सदहरेव पूर्वाह्णसमये पितुः समीप उपस्थितानां विपन्नानां भयाक्रान्तानां शुष्यन्मुखानां दीनानां कतिपयवनवासिनां व्यथातुरां कथामेकस्यात्युग्रस्य नरभक्षकस्य शार्दूलस्यातङ्कलीलानां तत्क्षणमेव तच्छासननिश्चयमकरोत्,-स्वभावत एव निर्भीकाऽस्वीकृत्यैव पितुः साहाय्यप्रस्तावं स्वप्रिय सेविकामात्रद्वितीया गगनमध्यादधोभ्रश्यति दिनकरे प्रस्थिता-अतिक्रम्य निर्जनं मार्गं, प्रविश्य गहनं वनं, वनवासिनाऽन्यतमेन केनचिदुपदिश्यमानेन निविडवृक्षपर्णसम्भारान्तरालप्रविशदारक्तसान्ध्यरागालोकितेन विपथेन निःशब्दमग्रे सरन्ती, अश्रुणोदेकमस्पष्टं ध्वनि श्वापदपदस्येव जीर्णपर्णपुञ्ज-पतितस्य, - सावधाना....सहसा समाकृष्य सायकं तूणीरात्, ध्वनिं तमनुसृत्य तमक्षिपत्,-निश्चला-क्षणेऽपरस्मिन्नेव समुद्भूतं वेदनातुरशार्दूल-गर्जनध्वनिगगनं विदारयन्तं दिङ्मण्डलं कम्पयन्तं वित्रासितपतत्रिगणं भयाक्रान्तशाखानिलीनशाखामृगकृतकोलाहलानुसृतं समाकर्ण्य शब्दवेधि-स्वशरसन्धानसाफल्यमतर्कयत्-हृष्टा.....प्राणान्तिकवेदनाकरुणकरुणं रोषरौद्रं तं कतिपयक्षणमात्रस्थायिनमनुसरन्ती नातिचिरादेवात्मानं व्यात्तमुखं प्रसारितपादं वनावनौ दुर्गमायां निपतितस्य सन्ततप्रवहद् रुधिरधाराप्लाव्य-मानकलेवरस्य पुरुषाधिकदैर्ध्यस्य तस्य नरभक्षकस्य शार्दूलस्य सम्मुखम् अलक्षयत्, ....किञ्चित् समुपसृष्टा....किञ्चिदवनमितपूर्वकाया....निरीक्ष्य तं मृतं समाश्वस्ता....विवक्षया कयाचिदुन्नमितमस्तका च तं युवानं स्वसम्मुखं....तं महाप्रमाणं युवानं....अवालोकयत्....निश्चलाभ्यां गूढरमणीयभावाभ्यां नेत्राभ्यां तामेव निध्यायन्त, सद्यः प्रसृतस्मितमनोहरतरमुखमुद्रं, पर्णान्तरालप्रविशत्तर-लतरसान्ध्यरविकरसंस्पृश्यमानतरलम्,-अवलोक्य तं चकित-चकिता भावेन केनचिदनामकेनाननुभूतपूर्वेण सहसा समाक्रान्ता, प्रयतमानैव कथं-चिदुत्थितुमश्रृणोत् तस्य मेघस्तनितगम्भीरामपरिचितामपि चिरपरिचितामिव भासमानां वाचं-'परनिहतं श्वापदं घ्नन् न कोऽप्यात्मानं बहु मन्यते'-इति तामेव सम्बोधयन्तीं,-सहसा क्रुद्धा समाकर्ण्य तस्य श्रुतिमधुरमपि

तिरस्कृतिव्यक्तिदुःसहमाक्षेपं प्रत्याक्षेप्तुं प्रवृत्तैवापश्यत्तं स्वयमवनमितपूर्वकायं तं श्वापदं निरीक्षमाणं, क्षणमात्रानन्तरं च उत्थाय तां पश्चात्तापम्लानमवलोकयन्तं व्रीडाऽऽरक्तकर्णपाशं किञ्चिद्वक्तुं प्रयतमानं,....परस्परविमर्दिभावनाऽऽलोडितमानसा चाकर्णयत् स्वसेविकायाः सद्यः समुपसृताया अस्फुटमाश्चर्योद्गारम् - 'अहो, स्वयं मल्लसूर्य' इति।

आरभत द्रष्टुं तं स्पष्टतरमेव स्मृतिदीपप्रकाशे....राजन्यवेषं पुरुषाधिकप्रमाणं गौरवर्णमभिमानोन्नतमस्तकं विशालभालफलकं दीर्घसरलनासं कर्णान्तविश्रान्ताऽऽरक्तलोचनं वृषस्कन्धं आजानुबाहुमुरसिलं[३] सिंहकृशमध्यमूर्जस्वलं....निर्मितमिव नियत्या समुन्मूलयितुं श्वेतान्, रक्षितुं भारतीयान्, प्रापयितुं पुनरपि भारतमातरमुत्कर्षस्य परां कोटिं....कित्तूरनरेशम् ।

आरभत स्मर्तुं तस्य गुणगणं....तस्य महाशयत्वं परोपकारित्वं सहृदयत्वं गुणग्राहित्वं रसिकत्वं स्वदेशाभिमानित्वञ्च....कर्णोपकर्णिकयाऽऽकर्णितं स्वपितुः सभायां समये समय उपतिष्ठद्भ्यो विविधप्रदेशीयेभ्यो नानाभाषाभाषिभ्यः क्रयविक्रयिकेभ्यो वेदशास्त्रपारङ्गतेभ्यश्चतुर्दिग्विजयाय प्रस्थितेभ्यः पण्डितेभ्यः कार्यविशेषगौरवात् देशाद्देशान्तरं प्रवसद्भ्यश्च तद्ग्रामे आतिथेये विश्रान्तेभ्यः पथिकेभ्यः ।

आरभत स्मर्तुं सरोमाञ्चं विशेषतस्तस्य साहसिकं कार्यं यत्तेन कतिपयसंवत्सरपूर्वमेव स्वस्वातन्त्र्यपुनरधिजिगीषया छायामात्रसाहाय्येन निःशस्त्रेणानुष्ठितमासीत्....कथं खलु स विक्रान्तचरितः .... एकदा दक्षिणापथस्य शार्दूलेन क्रूरेण कुटिलेन तेन टिपूसुल्तानेन युधिकपटेन बन्दीकृत्य श्रीरङ्गपट्टनस्य राजकीये कारागारे खड्ग-भीषणयवनरक्षिते निक्षिप्त आसीत्,....कथमेवं निक्षिप्तोऽपि स अभिमानधनस्तस्योग्रचरितस्य दास्यं-तात्कालिकमपि-क्षणमात्रमपि नाङ्गीचकार,....कथं नरकतुल्ये तत्कारागारे क्षणमात्रमपि स्थातुमपारयन्....अशान्तस्वान्तः....एकदा....घने नैशेऽन्धकारे....निद्राजडं प्रहरिगणमवलोक्य स निर्मुच्य बाहुमात्रबलेन

वातायनस्य लोहशलाका मणिबन्धस्थूलाः काराकक्षान्निरसरत्, महता चातुर्येण कारागारान्निःसृतः....अपरेद्युरेव, प्रातः,-संरक्षतामेव शून्यशून्यं काराकक्षं दक्षं मन्यमानानां प्रहरिणां-स्वैरमिव श्रीरङ्गपट्टनान्निरगच्छत्, मासं ग्राम एकस्मिन् मार्गनिपतिते निभृतं निलीनः, निरीक्ष्य यवनाधिपं-निशम्य तं तथा निःसृतं परं कुपितं, वितर्क्यामुं स्वराज्यं समुद्दिश्य प्रपलायमानं तदनुधावनोद्यतं, समनुपलभ्य च-तद्गवेषणाद्विरतं-पुनःप्रस्थितः, शनैः शनैः....निरातुर इव प्रवसन्....यदृच्छयेव राज्यं स्वमक्षत-शरीरोऽक्षुण्णाभिमानधनः प्रत्यागच्छत्, अवर्धयच्च स्वं बलं स्वामिप्रत्यागमन-परिवर्धितमनोबलं नक्तन्दिनमत्याचारिशासनार्थम् ।

आरभत अनुभवितुं द्विगुणितावेगेन तं भावमनामकं व्यतीते सायंसन्ध्या-समयेऽनुभूतचरम् ।

आरभत-साक्षात्कर्तुमात्मानं परास्तमिव पराजितमपि बन्दीकृतमपि मुषितमपि लुण्ठितमपि प्रभविष्णुमिव विजेतारमिव स्वतन्त्रमिव मोषकमिव लुण्ठाकमिव....हृष्टं....प्रहृष्टं....समुल्लासोल्लोलकल्लोलनृत्यन्मानससुमम् ।

आरभत-संवेदितुमात्मानं तथा परास्तमपि पराजितमपि बन्दीकृतमपि मुषिमपि लुण्ठितमपि प्रभविष्णुमिव विजेतारमिव स्वतन्त्रमिव मोषकमिव लुण्ठाकमिव....हृष्टं....प्रहृष्टं....समुल्लासोल्लोलकल्लोलनृत्यन्मानससुमम् ।

आरभत....विलिलीषमाणाऽपि साध्यसवशात् तस्मात् स्मृतिनिर्मितात्.... एषितुं तत्सन्निधावेव सदा स्थातुं, तन्मुखमेव सदा पातुं, तद्वपुरेव सदा स्प्रष्टुं, सदङ्गसौरभमेव सदा घ्रातुं, तद्वक्षस्येव चानिशं विलसितुम् ।

यापयन्ती च क्षणदां तां क्षणदां....तन्मयमानसा....तस्या अन्तिम प्रहरे निद्राया अङ्केऽलीयत....प्रौढयौवनाऽपि षोडशीव काचिद् मधुमधुरमकर-ध्वजविद्धा....अस्फुटं जपन्ती तस्य नाम....मल्लसूर्यः....मल्लसूर्यः ।

## (द्वितीयः परिच्छेदः)

'....मल्लसूर्योऽयं महाभागः....कित्तूरनरेशः....' समबोधयत्तामपरेद्युः.... पूर्वाभिमुखपुरुषप्रमाणवातायनप्रविशद्बालदिनकरकरसंस्पृष्टविविधवर्णकाचदीपभाण्ड-प्रोद्भासिते प्रलम्बमानपुष्पमालापूजितविविधदेवतैलचित्रभूषितभित्तिके समीप-वर्तिपूजाकक्षनिः सरदन्तः प्रविशच्चन्दनागुरुधूपवल्लरीसुवासिते उच्चावच-ग्रामीणजनसङ्कुले स्वगृहसभाकक्षे समुपविष्टः....सद्यः कृतपूजातिलक-भासुरविशालभालफलको....धवलवेष आरक्तोज्ज्वललोचनः परिगृहीतविशेषवेष उल्लास तदामन्त्रणानुसारं सद्यः प्रविष्टां, निरीक्ष्य तं कक्षं प्रातरेव तथा सुसज्जितं तया समुत्सुकग्रामजनसंमर्दितं किंचिच्चकितामवलोक्य क्षणेऽपर-स्मिन्नेव सभाजनमध्ये पितुर्दक्षिणतः आसनेऽन्यस्मिन् विशिष्टे विराजमानं नक्षत्रगणमध्ये सुधाकरमिव सुलक्ष्यं पूर्वेद्युरिव सद्यःप्रसृतमृदुलस्मित-मनोहरतरमुखमुद्रं तं युवानं विस्मितां, क्षणेऽन्यस्मिन् साध्वसजडां, निरुद्धश्वासां, शुष्यन्मुखीमन्यत्र इवात्मानं तत इच्छन्तीं, कृतार्थमिव तत्रागत्यात्मानं परिकल्पयन्तीं, स्वप्नदर्शिनिमिवात्मानं समुत्प्रेक्षमाणां निपीय तं क्षणमात्रं विस्मयविस्फारिताभ्यां लोचनाभ्यां साकूताभ्यामिव वाचालाभ्यामिव निर्निमेषाभ्यां क्षणेऽन्यस्मिन्नेव भूतलविनिगडितदृष्टिं, मूर्तिमिव निश्चलं द्वारप्रदेश एव क्षणमात्रमवस्थितां, अपरस्मिन्नेव क्षणे निशम्य पितुः साग्रहामामन्त्रणवाचम् 'एहि....एहि....वत्से'-इति ततश्चलितां, कथमपि समुपसृत्य पितरं सभाकक्षमध्यवर्तिनि महार्हास्तरणावृत आसने विराजमानं तद्वामतः समुपविष्टां, लज्जाऽऽरक्तां कम्पमानतनुदेहलतां, प्रस्फुटत्प्रस्वेद-क्लिन्नगात्राम्, अधोवदनकमलाम्, अङ्गुल्या भूमौ लिखन्तीमिव किञ्चित्,.... स्वकन्यां चेन्नाम्- 'अखिलकर्णाटदेशवासिभिर्बहुमानितो बहु मानयति नः सर्वान् स्वागमनेनाद्य....इह ।'

'....व्यतीत एवापराह्णसमये प्रतीक्षितोऽयं महावीरः....मार्गेमिलितानां नरभक्षकेण केनचिच्छार्दूलेन सन्त्रासितानां दीनानां वनवासिनां सन्त्रास-

कारणमपनिनीषुः....चिरायितः-' आह स वृद्धः स्वकन्याम् ।

पप्रच्छ च युवानं - 'अप्यपनीतं तन्महाराज?'

'अपनीतं'-प्रावृतत् चिरपरिचितेव भासमाना समुत्तेजिकाऽपि समाश्वासिकेव मेघस्तनितगम्भीरा वाक् । उपारमत च सहसा....समादिष्टमेव तस्मिन्नेव क्षणे समुत्थाप्यात्मानं तन्नयनाभ्यां निगडिताभ्यां वदद्भ्यामिव किञ्चिन् निवेदयद्भ्यामिव किञ्चित् समादिशद्भ्यामिव किञ्चित् तस्या नयनाभ्याम्।

'नात्र....आश्चर्यम्....नात्र आश्चर्यम्'-प्राह स वृद्धः....अनभिज्ञस्तस्य क्षणिकस्य दुर्लक्ष्यप्रायस्य नयनसंवादस्य ।

'आश्चर्यं तु....अस्मिन् भवत आगमने-' उवाच स ग्रामणीः.... अनभिज्ञस्तस्मिन्नेव क्षणे परस्परविनिगडितयोः साकूतयोः नयनयुगलयोः हासोत्फुल्लयोः ।

'किमिवात्राश्चर्यं, तात'-प्रत्युवाच विनीतस्वराऽपि अप्रत्याख्येय-प्रभावा सा वाक् ।....'ज्ञानवृद्धानां वयोवृद्धानां दर्शनार्थमाद्यवयसामागमने किमिवाश्चर्यम् ?....भवत्सदृशा अनुभवगुरवो ह्यस्मादृशानामनुभवहीनानां पथप्रदर्शकाः सौभाग्यमात्रलभ्याः ।'

शुश्रूषया हि विद्यमानासु राजकीयासु भारतवर्षीयासु परिस्थितिषु अस्मत्सदृशानां भारतीयानां युवकानां कर्तव्यस्य....तातचरणसन्निधौ समुपस्थितोऽस्मि कतिपयाभिन्नहृदयसुहृत्सहितः ।'

'....विद्यमानासु....राजकीयासु भारतवर्षीयासु परिस्थितिषु भारतीयानां युवकानां....कर्तव्यं....एकमेव-' मन्द्रस्वरमर्द्धस्वगतमिव....जगाद स वृद्धः.... सहसा गम्भीरमुखमुद्रः ।

'किं नाम तत् ?' पप्रच्छ सा समुत्सुकाऽप्यव्याकुला वाक् ।

'श्वेतानां निष्कासनम्' - अनुभववृद्धः सः दृढस्वरः प्रत्युवाच ।

सहासाऽवततार भावगभीरा नीरवता तस्मिन् विशाले सभाकक्षे जनसङ्कुले निःशब्दमुखरा ।

'समाश्वस्तोऽस्मि'-शनैः शनैः-स्वगतमिव-उज्जगार स कित्तूरनरेशः। 'समाश्वस्तोऽस्मि तातस्यानेनानुभवगम्भीरेण सुविचारितेन मार्गप्रदर्शनेन ।

'अहं खलु विद्यमानाः राजकीया भारतवर्षीयाः परिस्थितीरनेकवारं परिशीलयन्....विचारमिममेव निरकासयम् । ....न तु प्राभवं तं स्वीकर्तुं वस्तुनिष्ठत्वेन ।'

'वस्तुतस्तु....यः कोऽपि भारतीयः-युवा वा वृद्धो वा, मूर्खो वा पण्डितो वा, निर्धनो वा सधनो वा, पौरस्त्यो वा पाश्चात्त्यो वा, दाक्षिणात्यो वा औदीच्यो वा, यवनो वाऽऽर्यो वा, - विद्यमानां स्वदेशस्य परिस्थितीरनुशीलयेत् वस्तुनिष्ठया दृष्ट्या-स इत्थमेव सम्प्रधारयेत्, स्वं कर्तव्यम् ।

'कथं खलु भारतवर्षेऽस्मिन् खण्डप्राये तत्र तत्र प्रशासितानां महाराष्ट्रिय-वङ्गीय-द्राविड-यावनशीखराजसभानां सम्मतिरहम्भावप्रदत्ता एभिर्विनयनम्रैः श्लक्ष्णभाषणैः श्वेतैः सम्प्राप्ता, कथं खलु तेषु तेषु सामरिकवाणिज्यादिदृष्टिभिर्महत्त्वशालिषु स्थानेषु एतैः विविधमहार्होपायन-समर्पणविधिनाऽदूरदर्शिनां भारतीयानां नृपब्रुवाणां कृपा सम्पादिता, कथं खलु वाणिज्यमिषेण तेषु तेषु भारतीयेषु राज्येषु प्रवसतां, तत्रत्यानाम् उच्चावचाधिकारिणामनुग्रहं सम्पादयतामतिविश्वसनीयानां स्वाधिकारिणां साहाय्येन नृपाणां परिवारेषु कुलेषु प्रशासनयन्त्रेषुप्रजाजनेषु विद्यमानानां प्रच्छन्नामपि दौर्बल्यस्थलानां परिचितिर्यदृच्छयेवार्जिता, कथं खलु 'चञ्चुप्रवेशेमुसलप्रवेशः' इति न्यायमनुसरद्भिस्तैः अनुत्पाद्य संशयलेशमपि प्रविष्टिधिगता, कथं खलु पारस्परिककलहग्रहस्तेष्वशान्तेषु नगरेषु, विद्यमानानां स्वव्यापारिककेन्द्राणां रिरक्षिषया नाम स्वीया स्वमात्रवशंवदा स्वल्पाप्यनु-

शासनबलात् प्रबलतरप्रभावा सेना निर्मिता शनैः शनैः परिवर्द्धिता च, कथं खलु तः कपटमित्रैरदूरदर्शिनां कलहग्रस्तविवेकानां विपरीतबुद्धीनां भारतीयानां नृपाणां पारस्परिकेषु युद्धेषु सा तत् साहाय्यच्छलेन प्रयुक्ता व्यापारिता च वस्तुतस्तद्बलक्षीणने, कथं नाम तैस्तद् ऋणग्रस्तानां तेषां तेषां भारतीयानां नृपाणामान्तरतमास्वपि परिषत्सु शक्तिशालिनी स्वावस्थितिः सम्पादिता, कथं खलु तैः कालवशाद् विलयमात्यन्तिकं गतेषु प्रखरबुद्धिबाहुबलेषु भारतीयेषु नृपेषु अभिभूय तेषां वंशजान् अयोग्यान्, तेषां राज्याणि, क्षुद्राणि विशालानि वा, दरिद्राणि समृद्धानि वा, स्वतात्कृतानि,....तत्सर्वं विहङ्गमदृष्ट्याऽवलोकयन्.... न कोऽपि आक्षिपेन्नूनं तातस्य मतम् ।'

'अधुनातनीषु परिस्थितिषु तु....श्वेतानां निष्कासनम्....आवश्यकतमं सञ्जातं-मन्द्रस्वरमगदत् एको ग्रामवृद्धः ।'

'आम्!' प्रत्यवदत् कित्तूरनरेशः । '....श्वेतमहाद्वीपस्य विभिन्नेभ्यो व्यापारमिषेणेह आगता एते श्वेताः प्रभावक्षेत्रविस्तारार्थं प्रयतमाना यावत् पारस्परिककलहग्रस्ता आसन् तावत्ते न तथाऽस्मत्कृत अपायकारिण आसन् यथाऽधुना विलुप्तप्रायप्रभावेषु तेषां मध्यात् फ्रेंच्-डच्-पोर्तुगीजाख्येषु श्वेतेषु....अवशिष्टाः आङ्लाभिधाः ।'

'एत आङ्ला'-मन्द्रस्वरं जगाद पुण्यपत्तनात् सद्य एवागतः एको वणिक्श्रेष्ठः-परमधूर्ताः....न फ्रेंच इव चञ्चलाः सुखोपभोगलालसाऽऽहार्या वा, न पोर्तुगीज इव साहसिकाः स्वधर्मप्रसाराभिनिवेशविनष्टविवेका वा ।'

'प्रतिकूलायां परिस्थितौ शुनका इव लाङ्गूल-चालननिपुणा, अनुकूलायां शार्दूला इव विक्रान्तचरिताः, स्वार्थसाधनवेलायां जम्बूका इव धूर्ताः, जयशील-पक्षपाते मर्कटा इव चपलाः, तरक्षव इव कपटाक्रमणकुशला,

'मनस्यन्यद्वचस्यन्यद्' इति कापट्यक्वाथेनेव आजन्मनः परिवर्द्धिताः... न गणयन्ति इहलोकं परलोकं वा, न मनसि कुर्वन्ति । पुण्यसञ्चयं पापसम्भारं वा, न च वा चित्ते कुर्वन्ति सूक्तासूक्तोपायविवेकम् ।'

'प्रतिक्षणं प्रतिदिनं प्रतिवर्षं स्वधनभाण्डागारसंवर्द्धने....स्वराज्य-सीमपरिवर्द्धने...स्वराष्ट्रप्रभावविस्तार एव व्यापारयन्ति स्वं सामर्थ्यं शारीरं मानसं च ।'

'तद्-इत्थं कर्ककीटकानामिवापातशान्तानां प्रच्छन्नक्रियाणां परिणाम-भयङ्कराणामेषामाङ्लानां समूलमुन्मूलनमस्माकं भारतीयानामार्याणां म्लेच्छानां वा प्रथमं कर्तव्यम्'-आह कित्तूरनरेशः सन्धुक्षितोत्साहपाक इव दीप्त-तरमुखमुद्रः ।'

'तदर्थम्....एकीभावो....वज्रदृढः एकीभावः....परमावश्यकः.... एकीभूता हि वयं भारतीयाः, समरप्रसङ्गार्थं नातिसन्नद्धा अपि, खण्डप्राये एतस्मिन् अस्माकं देशे सर्वत्र एककालावच्छेदेन कृताभ्युत्थानाः, एतान् आङ्लान् सप्ताह एकस्मिन्नेव नामशेषतां लम्भयितुं समर्थाः ।'

'एतादृशः एकीभाव एव तु असम्भवप्रायः'-सखेदमाह मन्द्रस्वरं धुलप्पागौडः ।'

'असम्भवप्रायः,'-स्वीचकार मल्लसूर्यः, 'अस्मद्देशे साम्प्रतं विद्यमानानां महाराष्ट्रिय-गुर्जर-यावन,शीखराज्यसभानाम्....एता हि....अनुभूयापि परस्परवैमनस्यस्य कटु फलं परस्परकलहप्रवृत्तिं न लेशतोऽपि परित्यजन्ति.... साक्षात्कृत्यापि आङ्लसाहाय्यस्यापातमधुरं....परिणामं प्रासङ्गिककलहप्रसङ्गेषु तद्याचनातो न विरमन्ति....परिकल्प्यापि परमुखापेक्षायाः सर्वविनाशकमुदर्क-माङ्लानां सैन्यच्छत्रछायायां निमील्य विवेकनेत्रे विश्रामं स्वीकुर्वन्ति ।'

'ये केचन....अङ्गुलिमात्रगणनीया नेतारः, विविधबुद्धिदोषग्रस्ता अपि, परस्परेर्ष्यादूषितविवेका अपि, श्वेतसङ्कटयाथार्थ्यप्राक्कलनसमर्थमतयः-अस्माकं

मध्ये आसन्,-महादजीशिन्दे-हैदरअली-टिपूसुल्तान-नानाफडणवीस सदृशाः नेतारः-ते सर्वेऽपि नियत्याऽस्मत्प्रतिकूलयाऽतर्क्यगत्या स्वयमेवैकैकशः संसारशारिपट्टात् अपनीताः'-सखेदमाह वृद्धो धुलप्पा गौडः ।

'ये च तत्स्थानभाजो दौलतराव शिंदे-द्वितीयबाजीराव-सदृशाः... ते तु....' सहसा व्यरमत स्वमनोगतनिवेदनात्, विचार्येव किमपि, कित्तूरनरेशः ।

आह च कतिपयक्षणानन्तरं....भञ्जन् सर्वतः प्रसृतां नीरवतां-'तत्....दृढो मम विश्वासः....तात! यदस्यां परिस्थितौ....अस्माभिरेव, स्वतः क्षुद्रैरपि संहतौ महत्तमकार्यसाधनसमर्थैः भारतीयैः एकीभावसंसिद्ध्यर्थं प्रयत्नः कार्यः।'

'साधु....साधु'-सहसा प्राह ग्रामपण्डितः,- उक्तमेव -

'बहूनामल्पसाराणां समवायो दुरत्ययः

तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिन-इति ।'

'अनागतं खलु केन दृष्टम् ? ....साक्षात्कृत्यास्मत्सदृशानां साधारणानां भारतीयानां संहतिं तच्छक्तिं च शीखराज्याधिपसदृशा भारतीया राजानः.... शस्त्रसम्पदा सम्पन्ना अपि दौर्भाग्यात् उत्साहसम्पदा दरिद्राः....तां कदाचित् प्राप्नुयुः....बध्नयुश्च परिकरमेतस्मात् श्वेतनक्रमुखात् अस्माकं मातृभूमिं मोचयितुम्'-आह कित्तूरनरेशः ।

'कियान् स्वप्नदर्शी....अहं भव्योदात्तस्वप्नदर्शी!'-व्यस्मयत चेन्ना उन्नमितमुखारविन्दा निष्पलकया विस्फारितया कौतुकोत्फुल्लया दृशा एकाग्रया ध्यायन्ती तन्मुखं प्रस्फुरन्नासापुटम् ।....एते अस्य दीप्ते नेत्रे, विस्मृतवर्तमाने, लोकेते इव भाविनं भारतवर्षं श्वेतनक्रविमुक्तम् ।....इयमस्य मूर्तिः स्वाभाविकेन राजतेजोविशेषेण भासुरा....भासुरतरेव भाति भारत भूमि-भक्तिभासाः....एतावस्या रक्तौ ओष्ठौ भावावेशप्रस्फुरन्तौ....।'

'बध्नीयुरेव'-विश्वासदृढं प्रत्युवाच वृद्धो धुलप्पागौड: ।

'तदस्मिन् प्रयत्ने, तात, भवत आशीर्वचनं साहाय्यं च याचितुमागतोऽस्मि'-विनीतस्वरमाह स अतिथि: ।

'भवत्सदृशानां वयोवृद्धानां सम्माननीयानामादेशमनुसरन्त: एतत्प्रदेशीया: सर्वे देसाईवरेण्या, उद्देश्यमिमं गूढं मनसि निधाय, विहाय क्षुद्रां भेदभावनां, एकीभावमपूर्वं यदि उररीकुर्यु:....तर्हि ते - आपातक्षुद्रा अपि - स्वेनाभूतपूर्वसदृशेनोदाहरणेन अन्यप्रदेशीयानपि जनान् गुर्जरान्, वङ्गीयान्, यवनान्....तथा कर्तुं शनै: शनै: प्रोत्साहयेयु:,....ते च अन्यान्,....तेऽप्यन्यान्,....प्रज्वलयेयुश्चान्ते समस्तं भारतवर्षं....दहन्त: श्वेतमत्कुणान् ।'

'प्रतिजानीमहे आमरणं साहाय्यमस्माकमत्र'- आह स वृद्धो ग्रामणी:।

'-आशीर्वचनं तु, तात!'-उवाच कित्तूनरेश:....सहसा प्रयतमान: निबद्धुं स्वां पुनराविर्भूतगूढरमणीयभावां सहासां दृशं दृशा विस्फारितया कौतुकोत्फुल्लया तमेव पिबन्त्या: निर्निमेषायाश्चेन्नाया....'अहमन्येनैव रूपेण याचितुमातोऽस्मि ।'

विदिततदभिप्रायेव सहसा साध्वससमाक्रान्ता पुनरुद्भूतप्रकम्पा चेन्ना नमयामास रज्यमानं स्वं मुखकमलं,....कामयामास चात्मानं भूमौ निमग्नमिव वायौ विलीनमिव दिक्षु उत्पतितमिव....लज्जापरवशा ।

'केन नाम रूपेण'-पप्रच्छ स वृद्धश्चकित-चकितया दृशैव ।

'....तातस्य....आत्मजारूपेण'-प्रत्युवाच मल्लसूर्य:....'चिरात् खलु श्रुत्वा तातस्यात्मजाया विविधगुणप्रशंसां सर्वत्र प्रसृतां कौतूहलाक्रान्त: ह्य एव साक्षात्कृत्य तस्या याथार्थ्यमाश्वस्तोऽहं, तात, भवत: आशीर्वचनं तस्या रूपेण याचे ।'

'सुकलत्रोऽप्यहं....भवतः आत्मजां सहधर्मचारिणीं सहकर्म-कारिणीं....लब्ध्वा महत्तमे जीवनकार्ये यथा साफल्यमधिगन्तुं प्रभविष्यामि न तथा तथ्या विना ।'

'सुरूपा सुशीला च, मेधाविनी प्रतापिनी च, प्रशासननिष्णाता राजकार्य-कुशला च, निर्भया सहृदया च, तात, भवत आत्मजा नूनं दुर्लभश्चिन्तामणिः ।'

'लब्ध्वा तां भवत आशीर्वाचनरूपेणाहं....जीवनस्य महत्तमस्योद्देश्यस्य प्राप्त्यर्थं प्रारब्ध-प्रयत्नः साफल्यं प्राप्नुयाम्-इत्यत्र न संशयलेशोऽपि।'

वृद्धो धुलप्पा गौडस्तु....अनुरूपवराभावात् कौमार्ये एव चिरायमाणाया विदग्धायाः स्वकन्याया विषये चिरात् चिन्ताग्रस्तः प्राप्य तं स्वप्नेऽप्यप्रत्याशितं साक्षात् कित्तूरराजात् पाणिग्रहणप्रस्तावं चकितः जिज्ञासया तीव्रतीव्रया विलोक्य स्वकन्याया मुखं साक्षात्कृत्य च तद् लज्जाऽऽरक्तं विनम्रं प्रस्फुटत्स्वेदबिन्दुतारकितभालप्रदेशं रोमाञ्चितं विदितवेद्यः, प्रहृष्टः हर्षाश्रुपूरितक्लान्तलोचनः, मोदातिरेकविलुप्तवाक्....कथमप्युच्चारयामास-महाकवेर्वाणीम् -

'रत्नं समागच्छतु काञ्चनेन'

तदुच्चारणसमकालमेव उदभवत् चेन्नाया हृदयसरसि महान् हर्ष-कल्लोलः, य आपूर्य तां बहिः प्रवहन्, न केवलं तं सभाकक्षं, न केवलं तं पितुरावासं, न केवलं तं काकटिग्रामं, न केवलं तं प्रदेशं, न केवलं कित्तूरराज्यम्....अपि तु समस्तं कर्णाटदेशमापूरयामास ।

१. अरत्निमात्रं = हस्तपरिमाणम् । २. त्सरूः = खड्गस्य मुष्ठिग्रहभागः । ३. मुरसिलं = विशाल-वक्षम् । ४. निरकासयम् = निर्धारितवान् ।

## (तृतीयः परिच्छेदः)

''मल्ल!''....आह शनैः शनैः व्यावर्त्य दृष्टिमन्यमनस्कं निध्यायन्तीमधः प्रसृतं गोधूलिधूसरितं प्रसरद्धूमधूमलमुद्गच्छत्सान्ध्यपटहनादनिनादितदशदिशं विचरत्करुणाहृद्यसानिकास्वरं प्रज्वलित-सान्ध्यदीपं समुद्गच्छज्जनकोलाहलं स्वं कित्तूर नगरं,....स्निग्धस्वरं राज्ञी चेन्नम्मा, कृतपदाऽपि नवत्रिंशतिवर्षे पूर्ववदेव सुरूपा, ईषत्क्लान्तलोचनाऽपि ईषद्वलितभालप्रदेशाऽपि पूर्ववदेवाप्रत्याख्येयप्रभावविशेषा, किञ्चित्स्थूला, गाम्भीर्यं गभीरतरं चेतस उपपन्ना, महार्हधवलदुकूला, रत्नखचितमङ्गलसूत्रालङ्कृतशिरोधरा, विश्रब्धविश्रान्तनक्षत्रमालाभूषितस्तनमण्डला, खेलन्ती अङ्गुलीयकेन भर्तुः, समीप एव नीलकौशेयावृते चन्दनमञ्चे समुपविष्टस्यातिक्रान्तप्रौढावस्थस्यापि किञ्चिदप्यनवनमितपूर्वकायस्य किञ्चिदप्यस्थूलस्य पूर्ववदेव प्रभावोपेतस्य पूर्ववदेव प्रसन्नगम्भीरमुखमुद्रस्याधः प्रासादप्राङ्गणे सायंसन्ध्यारागोद्भासिते विस्तृते सिकतिलभूतये नैस्त्रिंशिकेन शस्त्रकलाकोविदेन एकेन सैनिकेन सह कृतकं युध्यमानं किशोरावस्थं सुरूपं कृशकायं युवराजं शिवलिङ्गरुद्रसूर्यं सकौतुकं सावधानमवलोकयतः ।

''व्यतीतानि अष्टादशवर्षाणि....एतादृश एव तस्मिन् सान्ध्यरागोद्भासिते सायङ्काले....तस्मिन् गहने वने....त भयानकं नरभक्षकं शार्दूलं शरलक्ष्यीकुर्वता त्वया वस्तुतोऽहं....पूर्णयौवनाऽपि बालेवानभिज्ञा शाठ्यस्य....कुसुमशरशरलक्ष्यीकृताऽऽसम् ।....आसं च घातिते तस्मिन् श्वापदे (किं सत्यमेव समया घातित आसीत्?) ममैव विजेत्रधिकारं महता चित्तौदार्येण स्वीकुर्वता....अहमेव विजिता....शठस्त्वं विजयं स्वं वास्तविकं तस्मिन्नेव क्षणे नूनमजानाः ।....नान्यथा-गतायां पितृगृहं मयि....मृग्यामिव संभ्रान्तायां....त्वं (सस्मितं)....लुब्धो लुब्धक इव....तस्यामेव सायंसन्ध्यायां मन्नामादिकं ज्ञातुं प्रयासं, ज्ञात्वा कुलादिकं....मां'' स्वकर्मसहचारिण्याः पदे आरोपयितुं सङ्कल्पं दृष्ट्वा च मज्जनकमपरेद्युः सर्वजनसमक्षं विवाहप्रस्तावं

तथाऽकरिष्यः । (सहासं) तातं....तथा विनीतस्वरं....तथा विनतमस्तकं.... मां याचमानस्यापि तव गूढरम्यभावेयं दृष्टि प्रच्छन्नमकथयदेव मां (मामेव केवलां) "मदीयं वस्तु मया याच्यते गुरुजनादिति ।"

"व्यतीतानि अष्टादशवर्षाणि....स्वप्नमनोरमाणि....क्षणकल्पानि" क्षणमेकं तूष्णीमवस्थाय पुनरप्यारभत वक्तुं सा...."महत् खलु सुखमुपायनीकृतं मह्यमेभिः....महत् सुखं नवोढाया वध्वाः, सास्राया अपि दृष्टायाः, सकौतुकं पितृगृहान्नीयमानायाः शिबिकायां मधुमधुरवर्तनेन वरेण, सवात्सल्यं स्वीक्रियमाणायाः पतिगृहे प्रौढ्या गभीरया भगिनीतुल्ययाऽनसूयया सपत्न्या महाराज्ञ्या रूद्रम्मया, सभक्तिभावमभिवन्द्यमानाया यवीयसाऽपि समर्याद-वर्तनेन विस्मयविस्फारितविलोचनेन तत्पुत्रेण पुत्रतुल्येन सूर्येणेव राजतेजोभासुरेण युवराजेन शिवलिङ्गरुद्रसूर्येण, सादरं नमस्क्रियमाणायाः परिजनेन स्वजनकल्पेन, सोत्साहं प्रवेश्यमानाया धवेन कौतुकचञ्चलेन तेषु तेषु बाह्येष्वाभ्यन्तरेषु च राज्यकार्यविशेषेषु । सबहुमानं नीयमानायास्तेन स्वराज्यस्य दूरविदूरस्थितेषु भागेषु, सकौतूहलं निरीक्ष्यमाणायाः प्रजाभिर्बद्धाञ्जलिभिः जयजीवादिशब्दमुखराभिः, सादरं आहूयमानायास्तेन समये समये मन्त्रिपरिषदधिवेशनेषु, सावधानं श्रूयमाणायास्तेन विचारविनिमयप्रसङ्गेषु महत्त्वपूर्णेषु....महत् खलु सुखं....(कातरस्वरं).... परन्तु तेषु तेषु....अवसरेषु....दुःखेन....दारुणेन दुःखेन....सम्भिन्नम् ।

"यदा मम पुत्रकः"-आह सा करुणकरुणं, विरम्य खेलनात् भर्तुरङ्गुलीयकेन, निःश्वस्य च दीर्घदीर्घं, यदा मम शिववासवराजः,.... शिव इव शिवशङ्करः....वासव इव ऐश्वर्यसम्पन्नः....मम आत्मजः.... आवयोः स्नेहसारः....आवयोः सर्वस्वं आवयोः आशाऽऽधारः.... शिववासवराजः....पश्यतोरेवावयोः निरुद्धनिःश्वासयोः....समुपेक्ष्यावयोः प्रेमबन्धनं....अविगणय्य शिवलिङ्गरुद्रसख्यं....तिरस्कृत्य ऐहलौकिकमैश्वर्यं.... आहूतोऽन्तकेन सर्वान्तकरेण....असहमाना इव कालातिपातं....निरुत्सतामेव

देशविदेशेभ्य आगतानां स्ववैद्यतुल्यानां वैद्योत्तमानाम्....अपुनरागमनाय.... मदङ्कात् गतः....तदा....तदा....।

अवष्टम्भयन्निव तस्या मनोबलं....सहसा राजा मल्लसूर्यं....आहत्य दृष्टिं स्वां तावता कालेन निविवर्तिषतः स्वान् कक्षान् वस्त्रपरिवर्तनार्थं युवराजात्....निबध्नत् तां सानुकम्पां तस्याः प्रतिक्षणं घनीभवति सायन्तमसि ईषल्लक्ष्यविशेषे मुखकमले प्रस्फुरन्नासापुटे किञ्चिदानते....सङ्क्रामयन्निव स्वं धैर्यं तस्यां स्कन्धस्पर्शेन निःशब्दमुखरेण....तां सम्बुबोध....''प्रिये!''

प्रबोधिता इव तेनामृतमयेनेव प्रियेण चिरपरिचितेनापि नित्यवीनेन सम्बोधनवचनेन दुःखतन्द्रायाः....राज्ञी चेन्नम्मा पर्यवस्थापितात्मा दृढस्वरं पुपूर वाक्यं स्वं....(स्पृशन्ती तस्य वामकरतलेन नयने स्वे तप्ते....), मल्ल! धैर्येण स्वेनागाधेन मां नापूरयिष्यः ।''

''त्वं खलु स्वयं दुःखभारभुग्नोऽपि....विदीर्णसङ्कल्पोऽपि....अवलम्ब्यात्मानमात्मनैव....चित्तं मम शोकबधिरं शनैः शनैस्तेषु तेषु प्रजाजनदुःखेषु तथा व्यावर्तयितुमारभथा ।....तन्निराकरणप्रयत्नेषु च तथा व्यापारयितुं.... यथाऽचिरादेव तद्विलोक्यानेकाः जननीः मामिव शोकसागरनिमग्ना आत्मानं तदन्यतमानधिकं मन्तुमारभत,....प्रयतमानास्ताः शोकसागरादुद्धर्तुमात्मानमपि तस्माद्-उद्धर्तुमारभत,....आरभत च शनैः शनैः सहजं स्वं प्रसादं पुनरासादयितुम् ।''

''चित्तं मम तस्माद्दुःखादतलात् स्वयमेवेत्थं शनैः शनैरुद्गच्छदवलोक्य.... चतुरस्त्वं....कुशलो भिषग्वर्यो रोगाद् भीषणात् सद्योमुक्तमातुरं हितकरे व्यायाम इव....तद्विविधेषु प्रजाहितकरेषु राज्यकार्येषु व्यापारयितुमारभथा,....अलभथाश्च साफल्यमचिरादेव कल्पनातीतं प्रयत्ने स्वे ।''

''प्रजाहितकरेषु विविधेषु कार्येषु अधिकाधिकं व्याप्रियमाणचित्ता ह्यहं प्रत्यहमधिकाधिकं साक्षात्कर्तुमारेभेयन्मम पुत्रकः....मम वासवराजः....

मम प्रजाजनानां....सघनानां निर्धनानां....सबलानां निर्बलानां....आर्याणां म्लेच्छानां....जिनधर्मानुयायिनां ख्रिस्तीयानां....रूपेण मां प्रत्यागतोऽस्ति.... प्रत्यागतोस्त्यपुनर्गमनाय । अधिकाधिकं च यतितुमारेभे "पुरुरूपस्य" मम पुत्रकस्य कल्याणसम्पदभिवृद्ध्यर्थम् ।"

"उदतरं च तमतलं शोकसागरं.... अन्ते....निर्मला....शान्तस्वान्ता.... अभिज्ञा कटुतमस्य सत्यस्य-यदस्मिन् संसारे -

"भवितव्यं भवत्येव....कर्मणां गतिरीदृशी ।"

"विज्ञाय....न जाने केनेव कारणेन....मम चितस्थैर्यं....त्वं मां शनैः शनैः कठिनतराणां विषमतराणां राज्यकार्याणां विचारणे योक्तुमारभथाः....विचारणेऽस्माकं नातिविशालस्यापि प्रगतिशीलस्य राज्यस्य सम्बन्धानां भारतीयैरन्यैः यावनैः आर्यैश्च राज्यैः सह....विचारणे तात्कालिकपरिस्थितिषु अस्मद्राज्यस्य कर्तव्याकर्तव्यानाम् ।....आरभथाः शनैः शनैः पुनरुज्ज्वलयितुं मम सहजमिव तद्द्वेषदहनं-एभिर्वर्षैः भस्माच्छादितमिव-चर्चयित्वा मया सह तेषु तेषु प्रसङ्गेषु श्वेतानां कपटकुटिलान् आपातनिरुपद्रवान् परिणामभयङ्करान् राजकीयान् व्यापारान्....प्रत्यहं परिवर्द्धमानान् तेषु तेषु भारतीयेषु राज्येषु....अबोधनिद्रानिमग्नेषु ।"

"शनैः शनैरहं....ताटस्थमिव लम्भिता विधिना....परित्यज्य जीवनेऽभिरुचि वैयक्तिकेन दृष्टिकोणेन....तस्मिन् तां सार्वजनीनेन तेन ग्रहीतुमारेभे ।"

"आरेभे च प्रयतितुं त्वया सह, मल्ल! विफलयितुं प्रयत्नान् श्वेतानां स्वसाम्राज्यविस्तारपरान् ।"

"आरेभे प्रयत्नान्....न त्वालेभे साफल्यं समाधानप्रदम् ।"

'स्मरामि यदा यदा तं तव प्रस्तावं....यं त्वं तस्मिन् सुप्रभाते

पितुर्ममानुमोदनार्थं सविस्तारं व्याचख्यिथ....तं तव प्रस्तावं यमनुसृत्य वयमेतद्देशीयानां सर्वेषां देसाईनाम्....एकीभावं, एकीभावमापन्नानां तेषां सङ्घीकरणं, सङ्घीकृतानां तेषां बलेन महाराष्ट्रियाणां शीखानां यवनानां-किं बहुना सर्वेषामेव भारतीयशक्तिकेन्द्राणां साहाय्यसम्पादनं, ततश्च तद्बलेन श्वेतस्य रोगस्य भारतभूशरीरात् समूलमुन्मूलनमभ्यलषाम.... विचारयामि च स्वात्मनैव कियत्तत् प्रात्यक्षिके जगति समवतारयितुं वयं प्राभवाम एतानि वर्षाणि दीर्घदीर्घानि....तदा तदासत्यं ब्रवीमि मल्ल! ग्लानिमेवापारामनुभवामि ।''

''सत्यम् !....मध्ये देसाईनां केचनास्माभिः....ऐकमत्यमापादिताः.... परन्तु-ऐकमत्यमेव....न एकीभावम्....केचन एव च,....न सर्वे....एकीभाव-वार्तयैव केवलया तेऽस्माकं तदाशयतां संशेरते....बहवस्तु क्षुद्रस्वार्थविलोपित-कर्तव्यबोधा दैव-वादविशारितपुरुषकारा आङ्ग्लप्रभुसत्तायाः किञ्चिदप्यपकारं वैयक्तिकमनुत्प्रेक्षमाणा अस्माकमैक्यसम्पादनप्रयत्नान् भ्रान्तिजन्यान् मत्वा उपहसन्ति ।''

परिस्थितौ अस्यां का वार्ता....तेषां सङ्घीभवनस्य?....का वार्ता तद्बलेन महाराष्ट्रियाणां शीखानां यवनानामन्येषां चाङ्लदूषिणां साहाय्य-सम्पादनस्य?....का च तद्बलेन श्वेतरोगोन्मूलनमस्य ?

''ग्लानिश्चेयं मम प्रगाढतरा नूनं भवति तदा....यदाऽहं पर्यालोचयामि प्रभावमाङ्ग्लानामेभिर्वर्षैः राहुग्रासमिव वेगेनानवरतेनाप्रतिहतेन प्रवृद्धम् । उपकृतानामिव नियत्याऽतर्क्यवत्याऽवतारणेन तन्मध्ये सर्वोत्कृष्टानां राज-पुरुषाणां सन्धिबोधचतुराणां स्वदेशभक्तानां दक्षाणां दूरदर्शिनां महत्त्वाकाङ्क्षिणां वॉरन्हेस्टिंग्ज-कार्नवॉलिस-जॉन शोर-वेलेस्ली-मिंटोसदृशानां....तेषां प्रभावः प्रबलतर एव सञ्जातः प्रबलतमश्च निःसंशयं भविष्यति नातिचिरादेव कौशल्येन तेषां प्रमुखस्य साम्प्रतस्य लार्डहास्टिंग्जनामकस्य श्वेतमहाद्वीपीय-घटनाप्रवाहेण परिवर्द्धितोत्साहस्य....अनुन्मूलितश्च विना कालातिपात-

मधिकतरम्....अनुन्मूलनीयतामेवातिदीर्घकालिकीं प्राप्नुयात् निरपवादाम्।''

विलीनेषु दिल्लीसदृशेषु प्रबलतमेषु भारतीयसत्ताधिष्ठानेषु.... विलिलीषमाणेषु पुण्यपत्तनसदृशेषु प्रतीकाराशाकेन्द्रेषु,....अस्तङ्गतेषु च पोर्तुगीज-फ्रेञ्चडचसदृशेषु पारस्परिकप्रतिस्पर्धाकेन्द्रेषु अस्माद्देशात्....किमिवा-नामावलम्ब्य भारतीया जनाः प्रभावं तेषामुन्मूलयितुमुत्सहेरन्....विधूयापि अहिफेनप्रभावतुल्यां निर्वेदतन्द्रां....साक्षात्कृत्यापि वास्तविकं सर्वशोषकं स्वभावसत्तायाः श्वेताङ्गप्रभूणाम् ?''

''परिस्थितिषु वर्तमानासु''-शनैः शनैरुपसञ्जहार राज्ञी चेन्नम्मा, निध्यायन्ती पतिमुखं विचारगम्भीरम्....ईषद्दृश्यमट्टकक्षे सेवकेन सद्य आनीतस्य सौवर्णदीपस्य प्रकाशे पीतपीते....परिस्थितिषु वर्तमानासु द्वावेव आशाबिन्दू....(सनिःश्वासं) यदि नाम तौ मदभिधानमर्हतः....प्रथमः.... औदीच्यः रणजीतसिंहः,....द्वितीयो....दाक्षिणात्यः बाजीरावः....तयोरपि.... औदीच्यः वीरोऽपि स्वाभिमान्यपि सामर्थ्यशाल्यपि - न जाने किमितिमातृभूमेः स्वातन्त्र्यं पञ्चनदप्रदेशसीमस्वेव संरक्षितुं प्रयतते....क्षुद्रासु....उदास्ते च बहिः स्वसमक्षं लुप्यमाने लुप्तप्राये वा तस्मिन् ।''

''....दाक्षिणात्यस्तु....''

''तस्यैव विषये विचारविनिमयं कर्तुमहमद्यात्र त्वामाह्वयम् ।'' सहसा जगाद कित्तूरनरेशः....स्मारित इव कस्यचिन्महत्त्वपूर्णस्य विषयस्य ।

''इयेष निवेदयितुं तस्य सन्देशं अद्यतने सायङ्काले एव समासादितम्। न तु प्रबभूव तथा कर्तुं (सस्मितम्)....ऊढस्तव प्रबलेनातीतस्मृति-प्रवाहेणाद्योत्तरङ्गेण ।

''अद्यतन एव सायङ्काले''-विरम्य किञ्चिदग्र उवाच सः, अप्राप्नुवमहं सन्देशमेकं तेन सम्प्रेषितम्....ततः खलु ज्ञायते यत् सः....स्वकुलदैवतस्य

भगवतः कार्तिकेयस्य पूजनार्थं सान्दुरं गतः,....ततः पुण्यपत्तनं प्रति-निवर्तमानो,....मां दिदृक्षते होङ्गले मार्गस्थे ।''

''अपि तेन सन्देशा एतादृशा अन्येषामपि माण्डलिकानां मार्गस्थानां समीपे सम्प्रेषिताः? पप्रच्छ राज्ञी चेन्नम्मा सहसा सावधाना ।''

''सम्प्रेषिता - इति तावत् श्रूयते'' - प्रत्युवाच तत्पतिः ।''

''दर्शनार्थम् आगतैर्माण्डलिकैः सादरमुपायनीकृतानां प्रभूतधनराशीनां प्रलोभकं दृश्यं प्रातिभचक्षुषा साक्षात्कृतं, नूनं तमेतादृशानां सन्देशानां प्रेषणे प्रेरयामास - जगाद सा सकुत्समिव ।''

''सुविज्ञातः खलु तस्य परधनलोभः'' - स्मेरमुखः प्रत्युवाच राजा ।

''....यदि नाम स भवदुपायनीक्रियमाणस्यापारस्य धनराशेः लाभेनैव केवलेन भवन्तमाह्वायिष्यत....तर्हि अहमावाहनं तदीयं निःसङ्कोचं स्वीकर्तुम् अकथयिष्यम् ।''

''आम् !....उपायनीकृता एवास्माभिः समये समये तस्यापारा धनराशयः....'' प्रत्युवाच राजा....''न किमस्माभिः स्वयमेव द्वि-त्रिगुणीकृतं तस्मै प्रदेयं वार्षिकं करद्रव्यम्?....न किं तेन परं प्रमुदितेन तया वार्षिकधनलाभवृद्ध्या....सम्मानिता वयं ''प्रतापराव'' इत्युपाधिभूषणेन?....कियत् कियत् सम्मानिता वयं तेन उपाधिभूषणेन....प्रदत्तेन स्वयं प्रतापशून्येन-तत्तु वयं सुष्ठु जानीमः ।''

परन्तु - तादृशसम्मानप्रदानानन्तरमपि अस्मद्विषये स साशङ्क एव दृष्टचरः''-जगाद राज्ञी ।

''मन्ये-असूयति राज्यायास्माकं....क्षुद्रायापि सुप्रशासिताय समृद्धाय ।''

''स्वयं प्रशासनदुर्बलोऽन्येभ्यः सबलेभ्यो द्रुह्यति ।''

''स्वयं वेतसवृत्तिः....अन्येभ्यः स्वाभिमानिभ्यः....स्वयं ।''

''न केवलं द्रुह्यति....अपि तु बिभेति''-सहसा जगाद सा ।''-आ जन्मनः संशयालुः सः अस्माकमेकीकरणप्रयासान् सन्देहविषाक्तया दृष्ट्याऽवलोकयति....मन्यमानस्तान् तत्प्रभुतायाः प्रतिकूलान् । (क्व नामास्ति तत्प्रभुता !) उदारहृदयतया शून्यो विहीनश्च दूरदृष्ट्या न शक्नोति विश्वसितुं यदस्माकं बलसन्नहनस्यैकीभवनस्य च प्रयासाः न प्रतिकूलास्तस्य....अपि तु सर्वशीर्षकस्य श्वेताङ्गस्य! ईश्वरमात्रतच्छक्तिसम्पन्नात् ''व्यथते नताननः....भ्रातृव्यविश्वासघातकेन जनकेन जनितः सर्वत्र विश्वासघातमेव पश्यति....पश्यति च सर्वेषामेव भव्यतमोद्देश्यमात्रप्रेरितास्वपि चेष्टासु महत्त्वाकङ्क्षापिशाचीनृत्यं....(सकुत्सं)....स्वयं जनितोऽतिमहत्वाकङ्क्षापिशाचीपीडितया जनन्या! .... आत्मविश्वासरिक्तः सर्वत्र सर्वतोऽपायमेवात्मन उत्प्रेक्षते ।''

''अकारणमित्रं....यं कमपि, निष्कारणमेव, अपकर्तुमीहते ।''

''आम्!-जगाद राज्ञी.... अतएव तेन एकदा अभ्यर्थिता आसन् तस्य श्वेताङ्गा महाप्रभवो यदस्माकं राज्यं समस्तमेव विलेयम्-इति । ते तस्य तामभ्यर्थनां मनसि नाकुर्वन् इति त्वन्यदेतत्....परन्तु....परन्तु.... तस्य चित्तवृत्तिरस्मद्विषये न तथा शत्रुतापूर्णा दृष्टचरा....एषु कतिपयेषु संवत्सरेषु ।

''आम्''-प्रत्युवाच राजा । ''परन्तु-एतावती अस्थिरा तस्य सौहार्दपूर्णा चित्तवृत्तिः क्षणिका....आ जन्मनः....यत् केन कारणेन कस्मिन् समये कीदृशे स्थले किं विषयीकृत्य सा वैपरीत्यं भजेत इत्यत्र न किमपि विनिगमकम् ।''

''एवं तर्हि न सः साक्षात्कर्तव्यः स्वयम् । प्रेषितव्यश्च तत्सन्तोषकरो धनराशिः उपायनत्वेन कस्याप्यधिकृतस्य राजपुरुषस्य माध्यमेन । अयमेव

श्रेयस्करो मार्गः''-दृढस्वरमुवाच तत्पत्नी ।

''एक एव विचारो रुणद्धि मामस्य मार्गस्यानुसरणात्''-शनैः शनैराह राजा ।....''श्रुतं खलु मया-सः समुद्विज्यान्ततो श्वेताङ्गमहाप्रभूणां दास्यात्, प्रतिदिनं कठोरतामधिकतरां भजता, काङ्क्षति तत्क्षेप्तुम् । पश्यति च तेन तेन मिषेण तान् तान् स्वमाण्डलिकान् गूढया ''महत्तमस्य तस्य सङ्कल्पस्य सिद्ध्यर्थं पर्याप्तं सामरिकं बलं शक्यं न वा सन्नद्धुम्-'' इति जिज्ञासया.... किं न सम्भवति - इयं तस्य साण्डुरयात्रा तस्य मिषाणामन्यतमैव स्यात्,....मां च एतेनैव उद्देश्येन दिदृक्षति सः,.... न तावदुपयानलोभेन । यदि ह्येवं स्यात् तर्हि द्वयमस्माकमाशङ्का कल्पनामात्रोद्भूता सिद्ध्येत्,....तां च बहु मानयन्, तद्दर्शनं परिहरन्.... अहं....भीरुरिति ।

''कस्मान्नाम श्रुतं भवता यत् सः अन्ततो मुक्त्यै पारदास्यात् व्याकुल इति?'' पप्रच्छ सावधाना राज्ञी ।

'अल्लप्पा गौडात्-प्रत्युवाच राजा ।'

''शेगुणश्याः....अल्लप्पा गौडात्?''-पप्रच्छ सकाकु राज्ञी ।

''आम्''-प्रत्युवाच राजा....''जानामि, प्रिये, तव विवक्षितम्....जानामि-अल्लप्पा अविश्वसनीयः अतस्तस्रू समाचारोऽप्यविश्वसनीय इति । परन्तु असत्यवादिनोऽपि मुखात् काकतालीयन्यायेन सत्यः समाचारः कदाचिन्निः सरत्येव ।''

''अपि च''-प्राह सः कतिपयक्षणानन्तरं, किं नाम भयं निमन्त्रणानुसारं होङ्गले तस्य साक्षात्करणे?

तूष्णीमेव तस्थौ राज्ञी, विलोकयन्ती कित्तूरनगरमधः प्रसृतमन्धकारावृतं नीरवं प्रसुप्तप्रायं....अन्यमनस्का ।

"चेन्नाम भयं यत्किञ्चिदपि । साम्मुख्यं तु तस्य कर्तव्यमेव । यदि हि नाम अहं, भयादनामकाद् बिभ्यन्, अवसरमिमं विफलयेयं तर्हि कर्तव्यच्युत एव भवेयम् ।

"तन्मन्ये-गन्तव्यमेव मया निमन्त्रणानुसारम् ।"

"कथं नु मन्यसे त्वम् ?"

जानामि तव मनोगतम्! "सस्मितमाह राजा अभिमुखीभूय मूकाया भार्यायाः ।" "त्वं तावद्व्याकुला....कदाचित् स चञ्चलप्रवृत्तिर्यथेच्छाचारो मामपमानयेत् । निक्षिपेच्च मां तथाऽपमानितं क्रुद्धं कारागारे-इति सञ्चिन्त्य ।"

आकर्ण्य स्वाममङ्गलामाशङ्कां भर्त्रैव तथा सहेलमुच्चारितां कातरा सा हस्तं तस्य हस्ते स्वे स्वेदार्द्रे आददौ निःशब्दा ।

"अयि! निराधारा तवेयमाशङ्का....सर्वथा निराधारा । आदौ तावदहं तस्य वास्तविकमभिप्रायमतिविश्वसनीयैर्माध्यमैर्विज्ञायैव तं साक्षात्करिष्यामि। ततः साक्षात्कारसमये वर्तनं तस्याहम्भावदुःसहमपि तिरस्कारदाहकमपि न मनसि करिष्यामि ।....सत्येवं, किमिति स मां कारागारे निक्षिपेत्?"

निक्षिप्तोऽप्यहमात्मानं स्वबुद्धिबलेन ततो मोचयितुं समर्थ एव । न स्मरसि किं - कथमहं एकदा तेन टिपूसुल्तानेन-दक्षिणापथव्याघ्रेन-बन्दीकृतः....तस्य निरुच्छ्वासात् कारागृहात् एकस्यां घनतिमिरायां निशायां, "अञ्जनमिव वर्षति नभसि," नमयित्वा काराकक्षवातायनशलाकाः, श्वापद इव निःशब्दचेष्टो निरसरं, गृहीत्वा दीनविप्रवेषं श्रीरङ्गपत्तनादपरेद्युरेव स्वैरं निरगच्छं, निभृतं निलीनो ग्राम एकस्मिन् मार्गपतिते, समीक्ष्य रिपु हताशं मन्मार्गणाद् विरतं ततो निर्गतः, निराशङ्क इव प्रवसन्, स्वैरं पथिकान्यतममिषेण....राज्यं स्वम् अन्ते प्रत्यागच्छम्?"

"स्मरामि, नाथ, स्मरामि,"-क्षीणं विहस्यावदत् राज्ञी चेन्नम्मा,....

''तदाऽहं बालिकैर्वासं नववर्षीया, परन्तु श्रुत्वा तव पराक्रमं तं प्रभाविता.... ततः प्रभृत्येव त्वयि अनुरक्ताऽभवम्।''

''(सस्मितं) तन्निश्चितं यदहं परमविश्वासार्हैः कतिपयैः सैनिकैः सह श्वः इतः प्रस्थास्ये....प्रभूतोपायनेन सहितः''-अवदत् संहरन् विचारविनिमयं कित्तूरनरेशः, उदतिष्ठत् चन्दनमञ्चात् निक्षिप्य च दृष्टिं उपरि अधः प्रसृतायाः कालेनैतावता नैशेनान्धकारेण समाच्छादितायाः प्रज्वलत्पथ-प्रदीपसंसूचितसन्निवेशायाः निःशब्दायाः प्रसुप्तप्रायायाः कित्तूरनगर्या अचलद् रात्रिभोजनार्थम्,....अनुसरन् निःशब्दं परतः समुपस्थितं प्रदीपपाणिं विनतं सेवकमतिविश्वसनीयम्....अनुस्रियमाणो भार्यया मूकया परस्परविमर्दि-भावालोडित-नितान्तशान्तस्वान्तया ।

## (चतुर्थः परिच्छेदः)

'गुरुदेव!'- रगाद बद्धाञ्जलि राज्ञी चेन्नम्मा चित्ताभ्रमलिनमुखचन्द्रा साधारणवेषा म्लानलोचना कार्श्यमुपगताऽशान्तस्वान्ता अवनितलचुम्बिना शिरसा प्रणम्य समुपविष्टाऽनतिदूरे मृगचर्मासने स्वामिनं कलिमथस्य ज्ञानवृद्धं तपोवृद्धं कालत्रयदर्शिनं प्रशान्तं करधृतरुद्राक्षमालं भस्मचर्चितभालं महतो वटवृक्षस्य मूले कुशासने विराजमानं पर्णान्तरालनिपतत् प्रखरदिनकरकरोद्भासितमूर्तिं,- 'मासब्दवाधिकः कालः खलु व्यतीतः शिरसा स्वीकृत्य भवत आशीर्वचनानि पावनानि पुण्यपत्तनेश्वरं साक्षात्कर्तुमितोगतस्य कित्तूरनराधिपस्य ।.... व्यतीतेऽपि एतावति प्रदीर्घे काले अनधिगत्य कामपि कुशल वार्त्तां तत्प्रेषितां, भवत इयं मूढा शिष्याऽतीव दुर्मनायते ।'

'अज्ञापि खल्वनया पत्रादानीताद्दूतेन होंगलग्रामात् नराधिपेन संप्रेषितेन यत् सः तद्रक्षकैः पञ्चाशद्भिरश्ववारैः सह सांदुरपुण्यपत्तनमार्गस्थं ग्रामं तं यथासमयं निर्विघ्नं प्राप ...., न प्राप यथासंकेतं पुण्यपत्तनेश्वरस्य दर्शनं तत्र...., प्राप प्रागेव निर्धारितसयात् पुण्यपत्तनमुद्दिश्य ततः कृतप्रस्थानस्य तस्य संदेशं, तदनुगमननोदकं...., चचाल चाकृतविश्राम एव द्रष्टुं तं तदग्रिम एव तद्विश्रान्तिस्थाने ।'

'ततः परं तु, धर्मप्राण, नाधिगताऽनया संक्षिप्ततमाऽपि कुशलवार्त्ता पत्रस्य वा दूतस्य वा माध्यमेन तत्संप्रेषितस्य ।'

'जानाति इयं स्वाभावं निरङ्कुशं यथेच्छाकारिणमविवेकिनं पुण्यपत्तनेश्वरस्य। ... जानाति इयं स्वभावं प्रारब्धान्तगमनपरं दृढं दक्षं कित्तूरनराधिपस्य । ... जानाति इयं-वाञ्छन्नपि पुण्यपत्तनेश्वरः न शक्ष्यति अपाकर्तुं कित्तूरनराधिपम् । ... जनाति इयं - अपाकृतोऽपि तेनाकारण-

दारुणेन ... कुशली प्रत्यागमिष्यति कित्तूरनराधिपः ।....तद्यापि-दुर्मनायतेऽहर्निशम् इयम् अनागतचिन्तया ।'

'चिन्तेयमस्या अनवरतं समापततां स्वगूढचराणां मुखेभ्यो विज्ञायानधिकृतान् समाचारान् वर्द्धत एव प्रतिक्षणम् । निवेदयन्ति हि ते-कर्तव्यबोधप्रेरिता अपि अनिच्छुका इव निवेदयितुं-कथं दृढनिश्चयः कित्तूरनराधिपः होंगलात् प्रस्थितोऽग्रिमं पुण्यपत्तनेश्वरविश्रान्तिग्रामं प्राप, कथमुदाववेज प्रविष्ट व तं ज्ञात्वा ततः पूर्वेद्युरेव कृतप्तस्थाने पुण्यपत्तनेश्वरं, कथं प्राप माप तत्र तस्य संदृशं पूर्ववदेव तदनुगमननोदकं कथं चचाल तस्मादपि स्थानात् विश्रम्य प्रहरव्दयमात्रं, कथं प्रापाग्रिमं तद्विश्रान्तिस्थानम-परेद्युः, कथं चानुबभूव पूर्वं नाटकं पुनः पुनरभिनीयमानम् ।'

'चिन्तेयमस्याः प्रबलं प्रयतमानाया अपि न शाम्यति ।'

'नाटकं ह्येतत् पुण्यपत्तनेश्वरस्य तत्स्वभावानुरूपं स्पष्टं त्यजयति यत् स गूढपुरुषमुखेन विज्ञाय कित्तूरनराधिपं स्वल्पबलमात्रसहितं तं तदवस्थमेव स्वं नगरं निनीषति ।'

'किमिति-इति तु न स्पष्टम् ।'

'अथवा-अस्पष्टमपि स्पष्टमेव....अस्मत्प्रतिकूलं तदिति ।'

'कियत्तत् प्रतिकूलम् - इत्याशेकैवास्यश्चिन्तां वर्द्धयति ।'

'तच्छमयतु गुरुदेवस्ताममृतकल्पथाऽभयप्रदया गिरा'-उपसंजहार सा ।

'राज्ञि!'-गम्भीरस्वरं प्रत्युवाच तपोवृद्धः स्वामी कलिमथस्व क्षणमेकं निमाल्य मुखं भावावेशरक्तं कृशस्य दुर्बलस्य युवराजस्य शिवलिङ्गरुद्रसूर्यस्य सविनयमुपविश्य विमातुः मातुरधिकायाः दक्षिणे पार्श्वे तस्याचिन्ताजडं निवेदनमेकाग्रेण मनसाऽऽकर्णयतः प्रस्फुरन्नासापुटस्य दन्तदष्टाधरस्य,-'विपरीतः खलु समय इदानी तनः ।....विपरीततरश्च भविता भाविनि

कालेऽनतिदूरे ।....सत्यस्यैतस्य कटुतमस्याभिज्ञा वयं तदाऽप्यास्य यदाऽऽयुष्मान् मल्लसूर्य इतः प्रयाणात् प्राक् ग्रहीतुं अस्माकमाशीर्वचनानि अत्र आगत आसीत् ।....परन्तु....वयं,....जानन्तो 'भावि चेन्न तः दन्यया' इति,....तं तस्य प्रवासान्न न्यवर्तयाम ।....पुण्यपत्तनेश्वरदर्शनाय तेनाणीकृतः सः प्रवासः न खलु वैयक्तिकस्यार्थलालसया प्रेरित आसीत्,....अपि तु तस्य समग्रस्य जीवनस्य मार्गप्रदर्शकेनोदात्ततमेन संकल्पेन....तस्य भारतीयमात्रकल्याणाऽऽकाङ्क्षामात्रोद्भूतया महत्त्वा-काङ्क्षया।....अतो....वयं जानन्तोऽपि न किञ्चिदप्यूचिम ।'

'तद्विजहोहि अनागतचिन्ताम् ।....आस्व निराकुला, 'सर्वर्था देवताः स्वस्ति करिष्यन्ति'-इति श्रद्धधाना ।....यथा ह्याह स्वामी-'सत्यसंकल्पस्य दाता भगवान् श्रीहरिः ।' आस्व शान्तचित्ता-अभिज्ञा सनातनस्य सत्यस्य यत्-सत्, किञ्चित्कालमभिभूत्मप्यसता, अन्ते विजयत इति ।....सदसद् विवेकशीलो धीर आयुष्मान् मल्लसूर्यः परिस्थितिं तमत्वां पर्यालोच्य यथायोग्यमुपायं करिष्यत्येव ।....परं प्रत्युत्पन्नमतिः सः । तत्-प्रार्थयमाना एव भर्तुः कुशलं स्वेष्टदेवताप्रसादत्वेन....परिवर्तय स्वां निष्फलां चिन्तामात्रपीडामात्रकारिणीं स्वप्रजाजनयोगक्षेमचिन्तायामुदात्ततरायाम् ।....कुरु मनोवृत्तिमविचलितां राज्य स्व स्वस्य सैनिकार्थिकसामर्थ्यपरिवर्द्धने पूर्ववदेव....येन प्रत्यागत आयुष्मान् मल्लसूर्यः न्यासं वंशपरम्पराऽऽगतं पवित्रं तदनुपस्थितावपि वृद्धिगतमवलोक्य....संतोषं परं भजेत । भजेत च समाधानमपूर्वमवलोक्य इमं स्वतनयं शिवलिङ्गरुद्रसूर्यं त्वया राज्यभारवहनयोग्यतामधिकतरामुपपादितम् ।'

'व्यापृताऽप्येवं प्रतिक्षणं दिवानिशं राज्यपरिपालने युवराजप्रशिक्षणे च,-अकथिताऽपि त्वं,-पुण्यपत्तनेश्वरं द्रष्टुमितो गतस्य स्वधनस्य विषये तत्र घटमानाः क्षुद्रा अपि पाटनाश्चारचक्षुर्भिः द्रक्ष्यस्येवानवरतम् ।'

'मन्ये-एतावता कालेन....पलायननिपुणः सः पुण्यपत्तनेश्वरः

तदनुगमनबद्धपरिकरश्चायुष्मान्....द्वावपि....पुण्यपत्तनं संप्राप्तो भवेताम् । तद्विज्ञाय तमत्यं घटनाक्रमं यथयोग्यं कर्तुमर्हसि ।'

'परमश्वरस्ते कल्याणं विदधातु ।'

राज्ञी चेन्नम्मा तु निपीयाऽपि तदुपदेशामृतमतृप्ता, 'गुरुदेवेन त्रिकाल ज्ञेनाऽपि न किञ्चित् स्पष्टं सूचितं मम भर्तुः भाविजीवनविषये'-इति परिकलप्य विषण्णा, 'कीदृश इव विरीततरो भविता भाविजीनकाल'-इति चिन्ताग्रस्ता, मूका, अभिवद्य स्वामिचरणौ, सह युवराजेन विचारमग्नेनेव निःशब्देन प्रसादं प्रत्यागता, सुचिरं विचार्यात्मनैव, 'विद्यमानासु परिस्थितिषु गुरुदेवोपदिष्ट मार्ग एव श्रेयान्'-इति निश्चित्य, संप्रेष्य पुनः कुशलान् विश्वसनीयान् प्रत्युत्पन्नमतीन् वणिग्वेषान् गूढपुरुषान् ज्ञातुं पुण्यपत्तनसमाचारान् साहाय्यितुं च कित्तूरनरेशं समापतितायां कस्याचिदपि विपदि,.... अभिनिविष्टवाविष्टेव प्रेरितेव केनापि, प्रतिक्षणं प्रजाजनानां कल्याणकारिषु विविधेषु कार्येषु आत्मानं तथा निमज्जयितुमारभत, यथाऽचिरादेव समस्ता एव प्रजाजनाः विविधभ्य आधिभौतिकेभ्योऽतिवृष्ट्यादिदुःखेभ्यस्त्राणं लमिताः, नानाविधेभ्यः संकटेभ्यो रक्षिता, आधिदैविकेन केनचित् प्रभावातिशयेन प्रभाविता इव, धनधान्यसमृद्धिं निरपवादामनुभवितुमारभन्त आरभत्त-दिवा वा रात्रौ वा, घोरे निदाघान्तचण्डे आतपे वा मुसलधारं वर्षति देवे वा, सर्वदैव सर्वत्रैव सर्वयैव जनन्येव तद्दुःखनिराकरणतत्परायास्तस्या वात्सल्यछत्रछायायां विश्रान्ताः, न केवलाः सनातनधर्मानुयायिनः, अपि तु यावनधर्मानुयायिनोऽपि, जिनधर्मानुयायिनोऽपि, ख्रिस्तधर्मानुयायिनोऽपि,-सर्व एव कित्तूरराज्यनिवासिनः, - किं बहुना पोर्तुगीत्रैरन्ध्रद्वीपाद्बलादानीता भारते, पीडिताः, प्राप्यानुकूलाः परिस्थितीस्तद्दास्यात् प्रपलायिताः, निभृतं कृतनिवासाः कित्तूरराज्येऽशरणशरण्ये, दासा अपि,-आत्मानं सौभाग्यशालिनं मन्तुम् । आरभत च विस्मर्तुं स्वां दुश्चिन्तां, याऽविज्ञाय कुशलवार्त्ता चिरस्य प्रोषितस्य तेषां प्रियस्य नृपस्य मल्लसूर्यस्य समुदिताऽऽसीत्

तेषां चिन्तनमसि ।

आरभन्त ते विस्मर्तुं तां दुश्चिन्ताम् न तु वराकी तेषां राज्ञी चेन्नम्मा, सा तु प्रतिक्षणमपीड्यत एव तया दुश्चिन्तयाऽन्तर्गूढधनव्यययया दिवा, रात्रौ तु तां दुःसहामेव गणयामास ।

नीरवे विकसद्विविधारामलतासुमसुगन्धापूरिते मन्दालोके शयनकक्षे कमलदलकोमलायां शय्यायां निपतिताऽपि कठिनपरिश्रमत्रुट्यत्सर्वाङ्गविकला-निमीलितसंतप्तनयनकमलाऽपि नालभत सा क्षणमेकमपि मुक्तिं तस्याः निमज्ज्यातले गंभीरसुषुप्तिसागरे सर्वविस्मारके अतिवाहयामास अनेका निशा युगदीर्घा....ध्यायन्तीविमनस्काऽऽरक्तारक्ताभ्यां विनिद्राभ्यां लोचनाभ्यां तारकितं नैशमन्तरिक्षमीषद्दृश्यं बहिः पुरुषप्रमाणात् शयनकक्षवातायनात्,.... पश्यन्ती स्मृतिचक्षुषा स्वं वक्ष्यमारुह्य महाप्रमाणं दुग्धधवलं कृष्णातिलकं पारसीकं प्रासादमहाद्वाराभिःसखां, सहसा व्यावर्त्य मुखं साक्षतविजयतिक-भूषितभालपट्टं प्रसन्नमपारात्मविश्वासदीप्तं तां देहल्यां सनीराजनापात्रं विष्ठतीं विस्फारिताभ्यां तमेव निध्यायन्तीं सहासाभ्यां लोचनाभ्यां क्षणमेकमव-लोकयन्तम्, अपरस्मिन्नेव च क्षणे चक्षुर्विषयतामतिक्रान्तं सहानुगच्छद्भिरङ्ग-रक्षकः सशस्त्रैरश्ववारैः,....कुर्वतीउत्फुल्लमनसा विविधानि रम्याणि मनो-राज्यानि प्रत्यागतं तं विषयीकृत्य ।

निमग्नाऽपि तंद्रायां श्रमातिरेकमात्रसमुद्भूतायां ददर्श स्वप्नेषु असम्भावेषु तमेव....कदाचित् पुण्यपत्तनेश्वरसैनिकैः श्वापदमुखैर्विचित्रवेषैः प्रच्छन्नमाक्रामद्भिः सह युद्धमानं,....कदाचित् गगनचुंबिमहाप्ताकारपरिवेष्टितात् पुण्यपत्तनेश्वर-कारागृहात् उत्फुत्य निःसर्तुं प्रयतमानं,....कदाचिदात्मना, सहसा काराकक्ष प्रविष्टेन, सह,-पश्यतामेवव्यादाय मुखबिलानि द्वाररक्षकाणामवसन्नगात्राणां,-द्वारशलाकान्तरमार्गेण निःसरन्तम् ।

इयं सा तस्या दुश्चिन्ता पर्यणम्यत विपद्बोधे घोरे नियत्था

यत्किंचित्कारिण्या नातिचिरादेव समुपस्थाप्य तत्सेवायां पुण्यपत्तनात् सद्यः प्रत्यागतमेकमतिविश्वासार्हं गुप्तचरं, संसूच्य च तन्मुखेन पुण्यपत्तनेश्वर-कित्तूरनरेशयोः पुण्यपत्तने राज्यसभायां मेलनं, पुण्यपत्तनेश्वरस्य यथेच्छाकारिणः निष्कारणमधिक्षेपकं वर्तनं, कित्तूरनरेशस्य धीरगंभीरं व्यवहारं, कृतनिश्चयस्येव तं येन केनापि उपायेन प्रज्वालयितुं बाजीरावस्यातिदुःसह तदवमाननं, स्वाभिमानिनः सहसा प्रज्वलितकोपस्य कित्तूरनरेशस्य मर्मविदारकमतिविस्पष्टं तत्संबोधनम्, अधिगतसाफल्यस्येव कटु कुत्सितं स्मयमानस्य पुण्यपत्तनेश्वरस्य तद्बंदीकरणं, निक्षेपणं च स्थलदुर्गनिभे सर्वतः निरुद्धनिर्गमे मुधोककरप्रासादे ।

अयञ्च तस्या विपद्बोधस्तया तथा निरुच्छ्वासतामेवाध्यगच्छद् यया यया सा....अजानात् वैफल्यं स्वभर्तुस्तेषां तेषां प्रयत्नानां कारागृहात् तस्मात् स्वयंमेव निःसर्तुं कृतानाम्,....अन्वभवन्नैरर्थक्यमात्मनस्तासां तासां प्रार्थनानां पुण्यपत्तनेश्वरस्य चरणकमलयोः (!) सेवायां विशेषदूतमाध्यमेन संप्रेषितानाम्,....अवेच्च वृत्तान्तं, मृगराजस्येव शृङ्खलाबद्धस्य, स्वातन्त्र्याय प्रतिक्षणं खिद्यतः स्वप्राणेश्वरस्य प्रतिदिनं क्षयतः शरीरस्वास्थ्यस्य ।

एवं ग्रस्ताऽपि विपद्बोधेन निरुच्छ्वासेन क्षणमात्रमपि न साऽन्वमोदत मनं सूक्ताऽसूक्तान् यान् कानप्युपायानवलंब्य स्वार्थसाधनतत्पराणामतिचतुराणां मल्लप्पा-वेंकटरावप्रभृतीनां राज्यसभास्ताराणां यद्याचित्वा पुण्यपत्तनेश्वरश्वराणां श्वेतानां साहाय्यं, तत्प्रभावेण स्वामी बंधनान्मोचनीय इति । दृढं हि सा विशंश्वास यदेतादृशी याचना,-आत्मसंमानभावनायाः सर्वथा विपरीता,-प्रदास्यति तेभ्यो बाह्येभ्यश्चिरप्रतीक्षितं स्वर्णिमावसरं वर्द्धयितुं स्वं प्रभावं कित्तूरराज्येऽपि ।

इत्थं व्यतीते निष्फलमोचनप्रयासैराकुलाकुलेऽपि दुःखबहुलतया दीर्घदीर्घ इव भासमाने संवत्सरत्रये....सा, विज्ञाय गूढपुरुषमाध्यमेन स्वभर्तुः गंभीरां रुग्णावस्थां परं व्याकुला, संप्रार्थ्य परमेश्वरं साफल्यप्रदानाय, गृहीत्वा

विनम्रेण शिरसा कलिमथस्वामिनो मितभाषिणो गंभीरमुखमुद्रस्याऽऽशीर्वादं, स्वयमयाचत भगिनीभावेन स्वपतिं लिखित्वा पुण्यपत्तनेश्वरमेकं भावकरुणं पत्रं संप्रेष्य च तत् गुरुसिद्दप्पासदृशस्य परमविश्वासाहस्य प्रत्युत्पन्नमतेः राजपुरुषस्य माध्यमेन ।

अहो प्रभावः सत्संकल्पस्य ।

अविवेक्यपि यत्किंचित्कार्यपि स्वभावचंचलोऽपि अकारणरिपुरपि पुण्यपत्तनेश्वरः, नूनं प्रभावितस्तस्यास्तेन करुणकरुणेन पत्रेण, अविगणस्य स्वसुहृदां दौलतरावशिंदेसदृशानां दुष्टानां विपरीतं मतं, मुमोच तत्पतिं कारागृहात्, अन्वमोदत च तं स्वगृहगमनाय ।

यदा तु राज्ञी चेन्नम्मा....यथापूर्वं व्यापृतशरीराऽपि तेषु तेषु राज्यकार्येषु अहोरात्रं भर्तुरिव स्मरन्ती, प्रतिक्षणं तत्प्रत्यागमनमेव देवेभ्यः प्रसादरूपेण कांक्षन्ती, प्रत्यागतस्य तस्य तांस्तान् औषधोपचारानेव संकल्पयन्ती...तस्यां सायंसंध्यायां सांध्यरागरञ्जितायां....देवर्षिघिहल्ल्याः समीप एवावस्थिते वानस्पत्य उद्याने निवर्तमानपतत्रिकुलकोलाहलवाचालमहावृक्षमण्डिते समुच्छ्वसत् सुमामोदमोदिते तेषां तेषामुद्भिज्जानां, केषांचित् हिमालयोपत्यकाया अधिगतानां, केषांचिन्मरुस्थलसंबंधिनां, केषांचिद्गाध-तडागतलेभ्य आनीतानां, केषांचित् पाषाणखंडसमुद्भूतानां, विभिन्नप्रभावाणां विचित्रवर्णानां तद्भन्ना उद्भिज्जविद्याव्यसनिनाऽऽनीतानां निरीक्षणे व्यापृता....अध्यगच्छत् तां चिरप्रतीक्षितां सुवार्त्तां सेवायां विनतमस्तकं बद्धांजलिपुटमुपस्थितात् धूलिधूसरितसर्वांगात् हास्योज्ज्वलाननादपि चिंताम्लानलोचनात् भातात् गुरुसिद्दप्पात्....तदा सा मोदभरात् क्षणमात्रं विसस्मार एवाऽऽत्मानम् ।

क्षणमात्रानन्तरमेव तु पर्यवस्थाप्य कथंचिदात्मानं पप्रच्छ तं किञ्चित् कातरेण स्वरेण-'कुत्र नु भवतः स्वामी'-इति ।

विज्ञाय तु तस्मात् प्रश्नसमकालमेव व्यावर्तितनयनादीषत् कंपमान-स्वरात्तं पुण्यपत्तनाच्छिबिकयाऽऽनीयमानं, कालेन तावता दुरंदुडीस्थितेऽर-भवीमठे रात्रिविश्रामार्थं प्रवेशितं, अपरेद्युश्च मध्यं गगनस्याध्यारोहति भगवति सवितरि कित्तूरनगरेऽपेक्षितं....सहसा विलुप्तमोदा म्लानमुखकमला व्याकुलमानसा निश्चिकाय ततः प्रस्थातुं तस्मिन्नेव क्षणे दुरंदुड्यै, अवलोकयितुं तं चिरपिपासिताभ्यां नयनाभ्यां, स्वयमानेतुं च तं तद्राजधानीमपरेद्युः।

प्रातिष्ठत च महरार्द्धमात्रानन्तरं महाप्रमाणाश्वारूढा घोटकारूढेन सचिन्तमुखमुद्रेण निःशब्देन युवराजेन शिवलिंगरुद्रसूर्येण चिकित्साकुशलेन विचारमग्नेन राजवैद्येन सशस्त्राश्वारोहशतकेन चानुगम्यमाना । निश्चक्राम च नगर्याः....व्यग्रचित्ता, स्वीकुर्वाणाऽन्यमनस्कतयाऽभिवादनानि कित्तूरनगरीनिवासिनां श्रुत्वा तन्नृपतिप्रत्यागमनसमाचारं दृष्टानां, समाकर्ण्य तदवस्थावार्त्तां चिन्ताग्रस्तानां, राजमार्गे कृतसंमर्दीनां, मंद्रं मंद्रं संलपताम्।

प्रारभत च प्रवासं वशं निःशब्दा....गृहीत्वा पुरःसरताऽलात-धारिणाऽश्वसादिना प्रकाश्यमानं निम्नोन्नतं उपलबहुलं दुरदुंडीग्नामयायिनं दुरध्वम् ।

आक्रम्य च तमनवरतम्, अनभिज्ञैव प्रतीपपवनस्य, अनभिज्ञैव घूत्कारस्य दिवाभीतस्यावलोक्याऽलातप्रकाशं संत्रस्तस्य पक्षाभ्यामात्म-नस्तज्ज्वालाः निर्वापयितुं वारं वारं प्रयतमानस्य, अनभिज्ञैव रुदितस्य शृङ्गालवृंदस्य दृष्ट्वा तदश्ववारदलं भीतस्यापसृत्य मार्गान्निलीय नातिदूरवर्तिषु क्षेत्रेषु ऊर्ध्वमुखमधःपुच्छं करुणकरुणं रुदतः....प्राप उन्निद्रं दुरदुंडीग्रामं ब्राह्मे मुहूर्ते....त्वरमाणहृदयायामिव द्रष्टुं तदध्यवसाय साफल्यं प्राचीने दिगंगणेऽवतरभ्यामुषः प्रभायाम् ।

निःशब्दं कृतस्वागता च तमत्येन जागरणाऽऽरक्तलोचनेन ग्रामप्रमुखेना-पेक्षमाणेनेवासंसूचितमपि तदागमनं ग्रामसीमायामादित एव समुपस्थितेन....,

प्रचालिताश्वा मार्गेण तत्प्रदर्श्यमानेन....प्राप महावृक्षराजिनिलीनं, सद्यः-प्रबुद्धपतत्रिगणकलखनिनादितं, कुर्वन्तमिव स्वागतं पतिव्रतायास्तस्याः, पुरुषप्रस्तणमृत्प्राकारपरिवेष्टितं, सर्वतःप्रज्वलद्दीपसंसूच्यमानरात्रिजागरं, रक्षन्तमिव तद्वल्लभं यमपाशेभ्यः प्रतिक्षणं समीपतरं समुपसर्पद्भ्यः धृत्वां तं स्ववक्षसि उभयतः प्रसृताभ्यां बलिताभ्यां दीर्घदीर्घाभ्यां स्वबाहुभ्यामरभवीमठम् ।

अवतीर्यश्रमस्वेदार्द्रशरीरात् फेनिलमुखात् स्वादश्वात्, प्रणम्य च बहिरागतं गंभीरमुखमुद्रं तत्प्रमुखं, तेनाऽऽशीर्वचनेर्बहुमानिता, तमनुसरन्ती, प्राप नातिचिरान्मठमध्यवर्तिनं कक्षं स्व-भर्तुः ।

व्यापारयामास च विस्फारिते लोचन उत्सुकोत्सुके तदन्तः....तद्दिदृक्षया परां काष्ठां प्राप्तया ।

चिरादभ्यस्ताऽपि घनान्धकारस्य सा तावदादौ नापारयत् द्रष्टुं किमपि.... ऋते कक्षकदेशे निवातस्थिरं प्रज्वलतस्तैलदीपात्, तदनन्तरं सा पश्यत् कक्षकोणेन्यस्मिन् आस्तृतमेंक शयनं, रिक्तमिव भासमानं,....एकाग्रचित्ता निश्चलनयनान्यस्मिन् क्षणे मानवदेहस्वेवाकृतिमास्थे मात्रशेषां कंबलेन धवलेनावृतस्य,....सावेगं समीपे गता च तद्वल्लभं कित्तूरनरेशं मल्लसूर्यं निश्चेष्टं शयानं कष्टेनेव महता कथमपि श्वसन्तं अर्द्धमुद्रितलोचनं क्षामं रुग्णमापीतवर्णम् ।

सहसा विगलितबलेव विलुप्तचेतनेव च तच्छयनसमीपे जानुभ्यां गता, यन्त्रचालितेव तद्हस्तं निरुष्माणं कृशं विगलितमणिबन्धं हस्तयोरीषत् कंपमानयोः दधार निरुद्धश्वासा,....प्रायतत तं संबोधयितुं,.... तन्मुखनिखातलोचना ।....प्रायतत....न तु शशाक ।

सत्यमेव प्रोक्तं महाकविना -

'तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ।'

अर्द्धमुद्रितलोचनोऽपि....अर्द्धतन्द्रितोऽपि....हि कित्तूरनरेशः करस्पर्शमात्रेण तेनाऽजानात् उपस्थितिं स्वसमीपे चिरप्रतीक्षितायाः स्वप्रियतमायाः, उदमिमीलत् उत्तप्ते आरक्ते विलोचने, अबध्नाश्च ते तस्यास्तस्यैवोपरि आनते पीतपीतेन तैलदीपप्रकाशेन प्रकाश्यमाने प्रस्फुरन्नासापुटे किंचित् कंपमानौष्ठपुटे वदनकमले तं एकाग्रया प्राणसर्वस्वमिव स्वं संक्रामयन्त्या जीवनज्योतिरिव तस्य पुनः प्रज्वलयन्त्या दृष्ट्या लोकमाने ।

क्षणमात्रं प्रदीप्य पुनः निर्वाणयोस्तयोः भावसागरेऽतले निमग्ना राज्ञी चेन्नम्मा तत्क्षणमेवाजानात् अकार्यतैव - कथां व्यथाया अपारायास्तेन कारागृहे विश्वासघातिनः सोढायाः ।

अजानाच्च युवराजः शिवलिङ्गरुद्रसूर्यः, शय्यासमीप एव जननीव जानुभ्यां गतः, जननीव एकाग्रया दृष्ट्या तं ध्यायन्-दृढमुद्रितौष्ठपुटः।

क्षणमात्रानन्तरमेव पर्यवस्थाप्याऽऽत्मानं, समाश्वास्य प्राणवल्लभ-माहार्यास्मितप्रफुलया मुखमुद्रया, राज्ञी चेन्नम्मा, विजानती मनोगतं तस्य, निश्चिकाय प्रस्थातुं ततः राजधान्यै तत्क्षणमेव, आदिदेश च स्वसेवकान् उपस्थापयितुं प्रच्छपटाऽवृतां शिबिकाम् ।

प्रातिष्ठत च, प्रणम्य मठप्रमुखं स्वीकृत्य तदाशीर्वचनानि, अनुगम्यमाना....शिबिकया सर्वविधसुविधोपपन्नया पिहितोभयद्वारया निमग्नं तंद्रायां कित्तूरप्राणसर्वस्वं वहन्त्या शनैः शनैरुह्यमानया शिबिकावाहकैः.... तत्पार्श्व एव स्वघोटकं धोरितकप्रायया गत्या प्रेरयता युवराजेन....राजवैद्येन समवलोक्यावस्थां रुग्णस्य निश्चित्य तं वस्तुतोऽसाध्यव्याधिग्रस्तं वस्तुतः खिन्नेनापि प्रकटत आत्मानमाशक्तिमिव विविधोषधियोजनाविचारमग्नमिव प्रदर्शयता राजवैद्येन....अन्यैश्चांगरक्षकैर्निःशब्दैः....सभाजयितुमिव पतिदेवतां तां पूर्वाचलशिखिरमारोहति भगवति सवितरि ।

स्वीकुर्वन्ती च प्रणामान् मार्गनिपतितानां ग्रामटिकानां ग्रामाणां च चत्वेरषु निशम्य स्वनृपप्रत्यागमनवार्त्तां तद्दर्शनार्थं कृतसंमर्दीनां समवलोक्या-श्वसादिदलं समापतत् सकौतूहलानां समुत्प्रेक्ष्य तदागमनं प्रहृष्टानां जयजयकारमुखराणां विज्ञाय तमतिरुग्णावस्थं पिहितशिबिकाशयितं दर्शनप्रदानाक्षमं खिन्नानां चिन्तितानां सहसा दुररीकृत्य मौनं नमस्कुर्वतां ग्रामीणानां, अनवरतं प्रवसन्ती, अवधीरयन्ती प्रखरतापं तपनस्य, अवगणयन्ती उपद्रवं प्रतापवाहिनः पवनस्य, प्राप, अस्तं गच्छति भगवति मरीचिमालिनि अपारयतीव द्रष्टुं तां प्रत्यासन्नवैधव्यां, वहति सायंसमीरे निःश्वास इव पुनः प्राप्य स्वपतिं चिरात् खलु प्रोषितं समाश्वस्तायाः कित्तूरराज्यलक्ष्म्या अनामिकभयाऽऽकुलायाः, कित्तूरनगरीम् ।

प्राविश्य च तां, शनैः शनैः सरन्ती अग्रे राजमार्गेण चिन्ताजडमूकनागरिकजनकृतसंमर्देन, निनाय स्वभर्तारं राजप्रासादं.... निनादयित्सु गगनमंडलं घनाघनघनगर्जनगंभीरेषु वित्रासितपतत्रिवृंदेषु चतुस्त्रिंशत्संख्याकेषु दुर्गप्राकाराऽऽरूढशतघ्नीस्फोटेषु राजवन्दनाव्यञ्जकेषु।

कृत्वा च तं सुखशयितं तस्य प्रिये शयनकक्षे विशालेऽनेकतदविश्रम-साक्षिणि....राजवैद्येन तस्य चिकित्सां प्रतियाममकारयत्....अप्रतिपालयन्त्ये वाऽऽगमनं सुनिश्चितं विख्यातानां वैद्योत्तमानां पुण्यपत्तनादिमहानगरेभ्यः सत्वरं सादरं निमन्त्रितानां....भीत्या कालातिपातस्य । स्वयं राजवैद्योऽपि दृढबद्धपरिकरः, संस्मरन् 'कर्मण्येवाधिकारस्ते' इत्यादि गीतावचनं, स्वामिनः औषधोपचारे प्रतिक्षणं व्याप्ततचित्तस्तमहर्निशमुपचचार ।

परंतु-कृतान्तदृष्टं समुपचरितुं....कालदष्टं रक्षितुं वा....न कोऽपि....न धन्वंतरिरपि....समर्थः-इत्येव सत्यम् ।

चतुर्थ एवाहनि हि....अस्तं गच्छति कित्तूरराजवंशभाग्यरवाविवरवौ-प्रयतमानस्यैव हताशस्य राजवैद्यस्य, याचमानानामेव जगन्नियन्तारं

तन्नृपतिप्राणान् कित्तूरराज्यनिर्वासनामाकुलाकुलानां, पश्यत एव स्फटिकमूर्तेरिव समीपं निश्चलमुपविष्टस्य संततजागरणाऽऽरक्तनयनस्य क्षामक्षामस्य युवराजस्य-मल्लसूर्यः....पुनरुज्ज्वलितप्राणज्योतिरिव सहसा प्रायतत गृहीतुं हस्तं समीपोपविष्टायाः स्वपत्न्याः स्वे हस्ते, प्रयतमान एव च वक्तुं 'चेन्ना'....पंचत्वं जगाम ।

'मल्ल!....मल्ल!' सहसा च चुक्रोश सा....एकाग्र्येण तन्मुखं अवलोकयन्ती ।

'मल्ल!....मल्ल!' सह चुक्रोशानाया कित्तूरराज्यलक्ष्मीः ।

'मल्ल!....मल्ल!' घर्घराक्षरमुच्छुष्कस्वरमुवाच बंदिनी चेन्नम्मा, प्रसह्य प्रत्यानीता वर्तमाने काले सहसा कर्णविषयतामुपगतेन 'हुकमहेर' इत्याह्वानशब्देन तीव्रेण कारागृहरक्षकाणामन्यतमेन प्रोच्चारितेन । अविश्वनीव स्वस्थितौ सुचिरमवलोकयामास स्वौ क्षीणौ हस्तो दृढं धरन्तौ लोहशलाका वातायनस्व । व्यापारयामास च स्वे समुत्तप्ते लोचने बहिरवलोकमानेऽ-प्यतीतदर्शनव्याप्तृमनस्कतयाऽनपवलोकमाने किंचिदपि....पुनरेकवारम् बहिः काराकक्षवातायनात् ।

....तया....तदा....तदा एकवारमेवावलोकितपूर्वः सः दिनकरः .... उत्तप्तकांचनभासुरः....कुर्वन् पापिमाशावधूमुखं व्रीडारकत-मिव....सः दिनकरः....बहोः कालात् प्रागेव निधनं गत आसीत् । उदित आसीच्च तत्स्थाने....अंधकारः....कज्जलाभः अंधकारः....आप्लावयन् तद्दिगन्तप्रसृतं सौवर्णरससिक्तमिव भासमानं पचेलिमगोधूमक्षमं.... मरकमणिमयमिव भासमानं क्षितिजदृश्यं तं वृक्षस्तोमं....स्वपूरौघेन,.... आप्लावयन् सर्वं दृश्यजातं ऋते विदूरे क्षितिजे पाश्चात्ये सद्य उदितभ्यो द्विजेभ्यः नक्षत्रेभ्यः क्षीणक्षीणप्रकाशेभ्यः....ऋते चाधो दृश्यमाने नातिदूरस्थिते बैलहोंगलग्रामे केषुचित् क्षुद्रावासेषु मंदं मंदं प्रकाशमानेभ्यो दीपकेभ्यः ।

सहसा खल्वभज्यम एकछत्रं साम्राज्यं नि:शब्दस्यांधकारसागरस्य निरुच्छ्वासमिव कुर्वत् प्राणिजातं....तत्तलादिवोद्गच्छता वेदनामिवात्यंतिकीं मुख्यता ग्रामपरवर्तिन: निबिडाद्वनादागच्छता कस्याश्चित् शृंगालिकाया: दीर्घदीर्घेण रोदनशब्देन, तमनुग्राम इव उद्गतेदाशुभसंसूचकेन करुणेन शून्याश्च आग्रोशव्यंजकेन स्वरेण ।

सहसा चानुबभूव सा....स्वौ पादौ मृण्मयाविव चेतनाशून्यौ नितानाश्रान्तौ तावत्कालपर्यन्तमुद्वहनात् शरीरहतकभारस्य....स्वौ हस्तो काष्ठायाविव जडौ निग्रडिताविव वातायनशलाकाभ्यां.... स्वाभानमसमर्थमिव स्थातु वातायनसंमुखं क्षणमात्रमपि तत: परम् ।

प्रायतत च व्यावर्तयितुं पदानि स्वानि धराशय्यामुद्दिश्य....प्रसारित-हस्ता ।

पारयामास च तया कर्तुं कथमपि....प्रस्खलत्पदक्षया ।

निचिक्षेप चात्मानं निश्चोतितचैतन्यमिव कठिनायां मलिनायां धराशय्यायां मत्कुणबहुलायाम् ।

आरभत च भ्रमयितुं स्वां दृष्टिमुत्तप्तां विलोलतारकां....भ्रातामिव। क्षाम्यन्तरे, काराकक्षप्रहरिसैनिकेन नि:शब्दमानीय कक्षकोण्योस्थापितेन धूमबहुलेन नारकीयदहनांशावतारेणेव भीषणदर्शनेनाऽऽरक्तपीतेनालातेन प्रकाशिते ।

आबबंध च तां क्षणमात्रं शय्याया: नातिदूरावस्थिते मलिने कांस्यभाडे अनुबभूव च सहसा तृषां....भस्मसात्कुर्वन्तीमिवान्तर्मर्माणि....अन्तर्ज्वलन्तीमिव सहस्त्रजिह्वं....क्रोशन्तीमिव 'तृषाहं.... तृषाहम्' इति ।

प्रसार्य हस्तं कम्पमानं यावन्निदधाति तद्भूमौ तावत् पपात तस्या दृष्टिस्तत्समाप एव पतीते रत्नांगुर्णायके....अलातप्रकाशे तस्मिन् मंदं

मंदं प्रकाशमाने रत्नांगुलीयके....तस्याः पुत्रस्य शिवलिङ्गरुद्रसूर्यस्य रत्नांगुलीयके....तयाश्चेतेभ्यः सर्वलुण्डकेभ्यः कथमपि तावत्कालपर्यन्तं गोपायिते तत् स्मृतिचिन्हे एकमात्रे....प्रयतमान इवाऽऽक्रष्टुं तस्याश्चित्तम्।

गृहीत्वा तत् शनैः शनैः....लालयन्तीव तद्वेपमानाभिः क्षीणक्षणाभिः अंगुलीभिः....आरभत चास्पष्टस्वरं जल्पितुं 'शिवलिङ्गरुद्र....।'

## (पञ्चमः परिच्छेदः)

'शिवलिङ्गरुद्रसूर्य!' जगाद श्रान्तस्वरं राजमाता चेन्नम्मा धृतधौत-धवलवसना सद्यःसमापितशिवपूजाभस्मचर्चितभालपट्टा कुलदेवताऽभिमुखं कुशासनोपविष्टा....व्यावर्त्य दृष्टिं शून्यशून्यां पूजादीपशिखायाः निवातस्थिरायाः....निबद्ध च तां यूनः कित्तूरनरेशस्य पूजागृहे धीरगंभीरया गत्या सद्यः प्रविश्य, प्रणम्य कुलदेवताविग्रहमाचम्य तच्चरणामृतं जग्ध्वा तत्प्रसादं सभक्तिभावं राजसभागमनात् प्राग्यथानियमं तस्याः पादयोः प्रणतस्य मुखकमले प्रस्फुरत्श्मश्रुमनोहरेऽपि रातेजोभासुरेऽपि तारुण्यछटा-कमनीयेऽपि धनव्ययेवात्तर्गूढया म्लापिते....'कीदृशी खल्वियं वार्त्ता यदस्माभिः पुण्यपत्तनेश्वरस्य प्रभुसत्तायाः समूलोन्मूलनार्थमुद्यतायुधानां श्वेतानां साहाय्यार्थं स्वसेनाः अचिरादेव इतः प्रेषयिष्यन्ते'-इति ।

'न निर्मूला, मातः!....नापि असत्या'-प्रत्युवाच घर्घराक्षरं तत्सुतः किञ्चिच्चकित इवाऽऽकर्ण्य तां पृच्छाम् ।

'निरंकुशस्य तस्य पापस्य ब्राह्मणाधमस्य बाजीरावस्य समूलोन्मूलनार्थं क्रियमाणे शोभने उद्यमे स्वसाहाय्यप्रदानार्थं सेनाः अस्माकं शीघ्रमेव इतः प्रस्थानं करिष्यन्ति ।'

'अविवेकि तवेदं कृत्यम्'-सहसा जगाद राजमाता ।

'नाविवेकि, मातः!....मया खलु....दिवंगतेष्वु तातपादेषु....शासनभारां-गांकरणक्षणादेव....एकाग्रमनसा यत् सैनिकं सामर्थ्यं परिवर्द्धितं तत् लक्ष्यमेकमेव प्रतिक्षणं मनसिकृत्य....एकमेव लक्ष्यं....बाजीरावाभिधानं पुण्यपत्तनेश्वरपदं च दूषयतस्तस्य नराधमस्य समूलोन्मूलनरूपम् । तत् सिद्धनुकूलासु परिस्थितिषु सुदैववशात् स्वयमुपस्थितास्वपि यद्यहं तत्साधनाय तत् सामार्थ्यं न प्रयोक्ष्ये....तर्हि दीर्घसूत्रित्वापवादमेव लप्स्ये ।'

'परन्तु'-प्रारभत राजमाता ।

'न त्वमिच्छसि किं, मात:!',- सावेगमपृच्छत् तत् सुत:, 'दण्डयितुं तं ब्राह्मणाधमं....येन....तव पति:....तस्य निमंत्रणे तथा विश्वसन् तद्गृहं गतस्तथा व्यापादित:?'

'इच्छामि'-दृढस्वरं प्रत्याह तन्माता । परन्तु- न परकीयानां श्वेतानां साधनीभूय !....यदि हि त्वं....'भारतीयैरन्यै: नृपै: सह एकमत्यमापन्न:- तं समूलमुन्मूलयितुं तत्पदे योग्यं शासकं च स्थापयितुं प्रयत्नं करिष्यसि तर्ह्यहं तव प्रयत्नमाशीर्वचनै: बहु मानयिष्यामि ।'

'परन्तु-कुत्र खलु तेऽन्ये भारतीया नृपा:....यै: सह ऐकमत्यमापन्नोऽहं महत्तमं कार्यमेतत् कर्तुं समर्थो भविष्यामि?....नैव सन्ति द्वित्रा अपि....ये निरंकुशं तं दण्डयितुं सामर्थ्यं स्वं प्रयुञ्जीरन् !'-प्रत्यवदत् राजाऽधीरतया ।

'न सन्तु नाम वर्तमाने काले ।....भविष्यन्ति तु अनागते । अहं तु तावन्तं कालं प्रत्यपालयिष्यम् ।'

'नाऽहम् !'

'यूनस्तवेयमातुरता स्वाभाविकी....परन्तु न विवेकिनी'-श्रांत स्वरमाह राजमाता । 'समस्ते भारतवर्षे प्रसार्य स्वसाम्राज्यजालमादौ अप्रत्यक्षेणरूपेण... अधुना एकैकश: स्तांस्तान् भारतीयान् नृपान् तदुत्तराधिकारिणो वा तत्तन्मिषेण तत्पदेभ्यो भ्रंशयतां तद्राज्यं चाऽऽत्मसात् कुर्वतां काककुटिलानां मधुजिह्वानां कृष्णहृदयानां बाह्यानां श्वेतानां साधनीभूय तवाऽऽभ्यंतरिकवैर-प्रतिनिर्यातनोपाय: न शुभोदर्क इति हि त्वं विस्मरसि प्रतिहिंसोदग्र: ।'

'कथमिव न शुभोदर्क:?'-पप्रच्छ शिवलिङ्गरुद्रसूर्य: ।

'तव....अन्येषां च....साहाय्येन पुण्यपत्तनेश्वरं समूलमुत्खाय कृतार्था: इमे श्वेता:, प्राप्त एवावसरे, त्वामन्यांश्च त्वत्सदृशान् अन्यान् नृपान् क्रमश: उत्खनिष्यति'-आह राजमाता ।

'कल्पनामात्रविलसितमेतत्'-प्रतिजगाद तत्सुतः प्रतिहतमतिः ('शेषं कोपेन पूरयेत्'-इति न्यायानुसारं) सक्रोधम् ।

'न कल्पनामात्रविलसितं, शिव, अपि तु वस्तुस्थितिमूलकं प्राक्कलनमेतत्'-सखेदमाह राजमाता ।

'स्यान्नाम'-सावहेलं प्रतिजगाद तत्सुतः । 'यदि हि पुण्यपत्तनेश्वरस्य समुन्मूलनेऽस्माकं बहुमूल्यं साहाय्यं प्राप्य प्राप्तप्राप्तव्या अपि आंग्लाः.... अंगीकृत्य कृतघ्नातादोषं....अस्माकमुत्खनन एव उद्यता भविष्यन्ति भाविनि काले....तर्हि वयं सर्वे युगपदुत्थिताः युगपदुद्यतायुधास्तान् सहेलमेव सागरतलेऽतले क्षेप्स्यामः ।'

(किञ्चिद्विरम्य....किञ्चिद्विचार्य....सस्मितं) 'गूढामिमं संकल्पं (एतावत्कालपर्यन्तमात्ममात्रविदितं) त्वां कथयामि, मातः!, अपनेतुं तव दुश्चिन्तामिमाम् ।' (मंद्रस्वरं) 'मया हि सुचिरं वीर्या संकल्पितमस्ति यत बाजीरावस्यपापस्योन्मूलने साहाय्यं कृत्वांऽऽग्लानामेषामादौ मैत्री अर्जनीया। आहार्यमैत्रीविप्तलब्धानां तेषां धन्यंमन्यानामेव, उत्तरभारतीयस्य प्रचंडवीर्यस्य शिखधर्मानुयायिनः रणजीसिंहस्यान्येषां च स्वातंत्र्य पुनर्लिप्सयाऽन्तर्ज्वलतां भारतीयानां नृपाणां साहाय्येन ते युगपदाक्रमणीयाः, प्रापणीयाश्च शलभगतिं समस्ते भारतवर्षे युगपत्प्रज्वलितस्य प्रचंडस्य क्रोधदहनस्य ज्वालासु ।

'(सगर्वम्) तदा त्वं वदिष्यसि, मातः, विवेकि तव कृत्यं तदासीदिति' उक्त्वा चेत्थं निर्जगाम पूजाकक्षादुन्नमितमस्तकः आत्मविश्वासोज्ज्वलमुखमुद्रः।

दूरदर्शिनी योग्यायोग्यविवेकिनी राज्ञी चेन्नम्मा तु, अभिज्ञा यौवनसुभस्यातिमहत्त्वाकांक्षिणः स्वभावस्य स्वतनयस्य, अभिज्ञा विमौ एकमतानां भारतीयानां नृपाणामल्पवीर्यत्वस्य, अभिज्ञा च कुटिलचेष्टिताना-मतिदूरदर्शिनां विचक्षणानां श्वेतानां....नालभताणीयांसमीप समाश्वासं.... कुतो नु समाधानं....विज्ञाय स्वतनयस्य भविष्यत्कालयोजनाः....प्रशंसनीया

अपि स्वप्नरम्याः ।

सुचिरं विचार्याऽऽत्मनैव, दीर्घं निःश्वस्य चाऽऽव्याययत् सेविकामुखेन मंत्रिणं गुरुसिद्धप्पाभिधं पूजागृहे । अकथयत् तस्मै स्वतनयसंभाषणसारं, प्रविश्य सादरं प्रणम्य यथोचित आसने समुपविष्टे तस्मिन् ।

अगदञ्च सखेदं-'आयुष्मान् वत्सः....चिरात् खल्वातुरातुरः स्वपितृहत्याप्रतिशोधार्थं....मन्यत एतादृशमवसरं योग्यतमम् ।....परन्तु-भावानाऽऽव्रकवशान्न साक्षात्करोति तत्परिणाममवश्यंभाविनम् ।'

'श्रीमन्तः, स्वपितृहत्वाप्रतिशोधार्थमेतत् वर्षत्रयमातुरातुरा अपि ना करिष्यन् इममात्मविघातकं संकल्पं....यदि श्रीमतां कृपाछत्रछायायामेभिर्मासैः दिवानिशं वर्तमानाः केचन उच्चाधिकारिणस्तेभ्यः इममापातसरलं परिणामभयंकरं परामर्शं नादास्यन्'-मंद्रस्वरमाह स वयोवृद्धः राजपुरुषः अघोमुखः ।

'के खल्वेतादृशा अधिकारिणः?'-तीक्ष्णस्वरमपृच्छत् राजमाता!

'मल्लप्पा-वेंकटरावादयः'-विनीतस्वरं प्रत्याह सः स्वामिभक्तः ।.... 'ते खलु-परिकल्प्याऽन्नभवतीं प्रत्यग्रपतिशोकां संसारविरक्तचित्तां,-नवीनवयसः नवीनाधिगतराज्यस्य कित्तूरनरेशस्य संनिधौ अहोरात्रं वर्तमाना, मधुमधुराभि-श्चाटूक्तिभिः शौर्यं तस्य बलं तस्य सैन्यस्य सततमाहोपुरुषिकया वर्णयन्तः, तस्यैतावन्तः प्रियाः संजाता यत्-।'

'आपातरम्याणां पर्यन्तपरितापिनां चाटुवचनानां लक्ष्याभवन् वत्सस्तर्हि साचेव समये प्रतिबोधनीयः'-स्वगतमिवाऽऽह राजमाता । विनिश्चित्येव च किमपि स्वात्मनैव....विसर्जयामास तं स्वामिभक्तं वृद्धं राजपुरुषम् ।

'आरभ्य तद्दिवात्....सा, स्मारयित्वाऽऽत्मानं स्वकर्तव्यं पतिप्रियं महत्तमं, गूढं निधाय मनसि पतिशोकं .... कौतुकाऽऽविष्टेव कौतूहल-

मात्रप्रेर्यमाणेव प्रत्यहं प्रत्यवसरं नवीनस्य सोत्साहस्य कित्तूरनृपस्य प्रशासनपद्धतौ अधिकाधिकां रुचिं दर्शयितुमारभत । तदुत्साहशक्ति-प्रभावितेव....तन्नवनवीनरणकल्पनाऽऽकृष्टेव आरभत च स्वयमपि नवनवीनान् आंग्ययुद्धकलानिपुणनिरीक्षणजन्यान् तांस्तान् सैनिकक्षमतापरिवर्द्धकान् उपायात् निरीक्षितुम् ।

कित्तूरनृपोऽपि, विमातरं मातुरपेक्षया आ बाल्याद्बहुमन्यमानः, तद्दुःखदुःखितः, समवलोक्य तस्या उत्साहं किञ्चिच्चकितः, समनुभूय तस्याः रुचिं परं प्रमुदिनः, तस्याः सद्यःप्रकटीभूतां राज्यकार्यरुचिं ईश्वरप्रदत्तं वरमेवामन्यत । बहु चामन्यत तत्संसूच्यमानान् तांस्तानुपायान् ।

एकमेव तु सदुपदेशं, तत्तदवसरेऽसकृत्प्रदीयमानं तथा, स नामन्या। वारं वारं समुद्बोधितोऽपि न विजहो स्वजनकहन्तृशासनसंकल्पं वज्रदृढम्। न स्वीयकार तस्याः परामर्शं समयप्रतिपालनपरम् ।

अपि तु-मंत्रप्रेरित इव ग्रहाऽऽविष्ट इव....प्रतिक्षणं चकार संनाहं स्वसेनायाः बलवत्तरं वज्रदृढम् ।

अन्यस्मिंस्तु संकल्पेऽलभत साफल्यमांशिकं राजमाता ।

मधुजिह्वाः हृद्विषावेंकटरावादयो हि, अकस्माद्वीक्ष्य राजमातरं तथा समुत्पन्नसमुत्साहां हतबुद्धयोऽपि, निरीक्ष्य च स्वामिनं तथा तन्निदेशपालनतत्परं विगलितधैर्या अपि, 'परिस्थितावस्यां समयप्रतिपालनमेव नः श्रेयस्करम्' इति संप्रधार्य, पृष्ठभूमौ एवापासरन्, प्रत्यपालयंश्च समयं स्वानुकूलं....शृङ्गाला इषतिचतुराः ।

'भावि चेन्न तदन्यथा'-इत्येव सत्यम् ।

वारं वारं विविधतर्कोपन्यासपूर्वकं निषेधयत्या अपि स्वजनन्याः.... अभिनिविष्ट व केनापि पिशाचेन....शिवलिङ्गरुद्रसूर्यः, अचिरादेव हि

निनाय स्वां सद्य:पुनर्गठितां अनुशासनपरां प्राप्य स्वराजहन्तृशासनावसरं चिरप्रतीक्षितं प्रोद्वेल्लद्रणोत्साहचण्डां सेनां, सहांऽऽग्लसेनाभि: रणांगणे.... पराबभूव पुण्यपत्तनेश्वरं (पलायनशूरं!) बिल्वग्रामयुद्धावसरे,....भ्रंशयामास तं पुण्यपत्तनेश्वरपदात्,....प्रत्याजगाम च स्वां राजधानीं सफलमनोरथ: प्रमुदिचित्त: ।

प्रत्यागत एव, अननुभवन् कृतार्थतालेशं पूरितायामपि स्वप्रतिज्ञायां, स्मरन् सततं खिन्नाया इव रुष्टाया इव तन्नि:स्नेहं सभाजनं तस्य प्रत्यागतस्य बिल्वग्रामयुद्धात्, संपूर्याऽन्यां गरीयसीं स्वप्रतिज्ञां मातु: स्नेहं वात्सल्यमादरं यथापूर्वमर्जितुं कृतनिश्चय:, अधिकतरेणैवाभिनिवेशेन स्वराज्याभिवर्द्धने स्वसैन्यस्य बलवत्तरीकरणे नवीनीकरणे, भारतीयैस्तैस्तै: नृपै: मैत्रीसंबंधानां स्थापने च तथा प्रार्वताविगणय्य परिश्रमं यथा तस्य माता चेन्नम्मा, निरीक्ष्य तं परदेशिकसाहाय्येन समुन्मूलितस्वदेशिकनृपामादौ खिन्ना, तटस्थतया उदासीनतया तस्य तान् प्रयत्नान् लोकमाना, शनै: शनै: कौतूहलाऽऽकृष्यमाणचित्ता, नातिचिरादेव तस्य क्रियाकलापेषु पूर्ववत् रुचिं कर्तुमारभत ।

बिडालदृष्टि: काकमति: श्वापदचतुरा बकधूर्ता श्वेतप्रभुता च ।

साऽपि लोकप्रियस्य देशभक्तस्य दूरदर्शिन: दिवंगतस्य कित्तूरस्वामिन: महत्त्वाकांक्षयाऽऽदित एव परिचिता, तद्राज्यस्य सह्यपर्वतपादवर्तित: कूटयुद्धदृष्ट्याऽप्रत्यास्येयस्य महत्त्वस्य नितान्तमभिज्ञा, कित्तूरनृपपुण्य-पत्तनेश्वरयो: पारस्परिकं वैमनस्यं ताटस्थ्येनेव लोकमाना, प्राप्य कित्तूरनृपमरणवार्त्तां धारवाडस्थितस्वप्रतिनिधिमाध्यमेन गूढं समाश्वस्ता, अधिगत्य नवीनस्य किशोरस्य कित्तूरनृपस्यानुभवहीनस्य स्वपितृहन्तृ-वैरप्रतिनिर्यातनप्रतिज्ञां मुदिता, दार्ढ्यं तस्या: प्रतिज्ञायास्तैस्तैरुपायैर्वर्द्धयितुं प्रयत्नशीला, अन्ते लब्ध्वा तस्य सैनिकं साहाय्यं बिल्वग्रामयुद्धे संतुष्टा,

प्राप्तप्राप्तव्याऽपि समुद्वेजयितुं कित्तूरनृपं 'स्वमित्रं' बलादृगृहीत्वा तद्राज्यस्य खानपुराख्यमंशं विप्रकृततन्मनोभावनिरीक्षणव्यापृता, विज्ञाय तस्यानुभवहीनस्य मनोरथान् द्रव्यक्रीतानां वेंकटरावसदृशानां तद्राजपुरुषाणां माध्यमेन कुत्सितं स्मयमाना, हिंसाश्वापद इवाऽऽचिक्रंसुः, सावधानतया तस्य क्रियाकलापेषु रुचिं कर्तुमारभत ।

कित्तूरनरेशस्तु, नितांतमनभिज्ञः राज्ये स्वे तत्र तत्रांऽऽग्लैः प्रसार्यमाणानां, विषकृमीणामिवानर्थकारिणां देशद्रोहिणां गूढपुरुषाणां, स्वसेनासंनहने एव नवीनशतपद्यादिएवसामग्रीसंपादन एव सततं व्यापृतचित्तः, शीघ्रमेव,-नवीनत्वाद्वा वयसः, चातुर्याद्वांऽऽग्लानां, वैपरीत्याद्वा विधिलिखितस्य, नियतत्वाद्वा भारतमातुः पारदास्वस्य,-स्वां सेनां पर्याप्तसामर्थ्यसंपन्नामुत्प्रेक्षितुमारभत ।

आरभत पत्तुं पत्राणि द्वित्राणि-संप्रेषितानि अन्यैर्भारतीयैर्नृपैः स्वसाहाय्यप्रदित्सामस्फुटं प्रदर्शयन्ति-नितान्तसन्तोषप्रदानि ।

न व्यधत्त स्वसन्तोषमात्ममात्रविदितं मातृमात्रविदितं वा, अपि तु प्रकटीचकार योग्यायोग्यावसरेषु स्वसुहृद्गोष्ठीषु....विस्मरन् कौटनैतिकीं शिक्षां-'षट्कर्णोभिद्यते मंत्र' इति ।

आहोपुरुषिकया प्रशंस्यमानश्च क्षुद्रवैयक्तिस्वार्थसाधनदत्तः मधुजिह्वैः जिह्वैः वेंकटरावप्रभृतिभिः मुहुर्मुहुर्वर्णयामास स्वमनोगतानि अत्युक्तिरञ्जितानि। प्रोत्साहितश्च तैः कृतकसेवकैः,-अनापृच्छ्यैव मातरं, समुपेक्ष्यैव गुरुसिद्धप्पासदृशान् वृद्धान् अनुभवसम्पन्नान् वंशपरम्परागतान् सेवकान् वा,-दधर्ष-अकृतपर्याप्तरणसंनहन एव, अप्राप्तप्रभूतमित्रसंपत्साहाय्य एव,-उद्वेजयितुमांग्लान् असकृद्विरम्य प्रदानात् तेभ्यः प्रतिसंवत्सरं प्रदेयतया नियतस्य माण्डलिककरद्रव्यस्य पादोनलक्षद्वयरूप्यकात्मकस्य । प्रादाच्च तत् प्राप्यैव कठोरभावानि स्मारकपत्राणि तेभ्यः ।

राजामाता चेन्नम्मा तु, आदौ तस्य क्रियाकलापेषु स्वराज्यसामर्थ्य-परिवर्द्धनपरेषु समुपजाताभिरुचिरपि शीघ्रमेव विज्ञाय तस्य पर्याप्तसामर्थ्याभि-वृद्धिप्रताक्षाऽसहनं स्वभावं म्लाना, पर्यालोच्य तस्य सुहृदुर्हृद्विवेकाऽसमर्थां प्रेक्षां खिन्ना, साक्षात्कृत्य तस्य परिस्थितिचार्याशर्याऽऽकलनाऽक्षमं विवेक-मुद्रासीना....शनैः शनैरग्रस्यत चित्तया घोरया ।

'यदि नाम पिताऽस्य अत्राभविष्यत्....तर्ह्ययं स्वाभिमानी....मूर्तः भारतीयः पराक्रम एव जाग्रत् धरंश्च मानवं रूपं....मम पुत्रकः, तेनोपदिश्यमानेनानुभवगरिष्ठेन श्रेयस्करेण मार्गेणाऽर्थकारणे परिपक्वतां मतेः प्राप्नुवन्,' 'आवयोस्तत् स्वप्नमनोरमं अभिलषितं सत्यसृष्टौ अवतारयितुं समर्थोऽभविष्यत्'-वारं वारं चित्ते चिन्ताकुले कर्तुमारभत सा ।

इयं च चिंताकुलाऽवस्था तन्मसः निरुच्छ्वासतामेवाध्यगच्छत् प्राणपीडिकां नातिचिरादेव विज्ञाय एकदा सायं समये पूजागृहे सविनयमुपस्थितात् स्वर्वैद्यादिवाऽऽयुर्वेदशास्त्रपारगताद्राजवैद्यात् वयोवृद्धात् आशंकां नवीनवयसः कित्तूरनराधिपस्य जन्मत एव नातिसुदृढशरीरस्य प्रतिसायं सूक्ष्मज्वरग्रस्यमानस्वापि अवधूय दुश्चित्तं तत् यौवनसुलभया हेलया स्वस्थत्वेव दैनंदिनानि कार्याणि सोत्साहमनुतिष्ठतः वेगेन क्षयोन्मुखीभवन्त्याः शरीरावस्थायाः । सद्य एव भर्त्रा वियोजिता सा पुत्रेणापि चिरवियोगस्वाऽऽशंकामपि वज्रपातसमां भूकंपतुल्यां समभावयत् । अपृच्छच्च कण्ठगतप्राणा शुष्कस्वरं राजवैद्यं पौनःपुन्येन तामाशंकामधिकृत्य। ज्ञात्वा च तस्मात्तां श्रमातिरेकसमुद्भूतामाशंकाऽनधिगांभीर्यां तत्क्षण एवाबध्नात् परिकरं निर्मूलयितुं ताम् । निरचिनोत् विधूय औदासीन्यं परित्यज्य ताटस्थ्यं स्वयं वोढुं कार्यभारं पुत्रस्य । आरभत चान्येद्युरेववाऽऽहार्योत्साह-तिरोधापितान्तर्विषादा तथा कर्तुम् ।'

एवं कृत्वा स्वात्ममात्रविदितं राजवैद्यकृतं राजरोगनिदानं, गोपायित्वा स्वमनोऽवस्थां स्वष्ठायाया अपि, उत्साहेनापूर्वेण पूर्ववत् स्वराज्यप्रशासने

रुचिं दर्शयितुं प्रवृत्तायाः,....अधिकृत्य क्षुद्रतममपि प्रशासनकार्यं रुग्णशय्याशयितं पुत्रमेव मार्गनिर्देशमिव पृच्छन्त्याः,....तस्य एव संमतिं बहु मानयन्त्याः,....तस्य एव मतमनुसरन्त्याः, तच्चिमोद्वेगकारणमने-कदाऽऽकस्मिकमनेकदा निष्कारणं यावच्छक्यं परिहरुयाः,....तं भारमुक्तं प्रसन्नचित्तं कर्तुं प्रयतमानायाः,....तस्य पानभोजनशयनादिविशेषेषु सविशेषं मनः कुर्वन्त्याः,....तस्यौषधिपानादिषु काकतालीयन्यायेनेव सविशेषं ध्यानं ददत्याः,....विस्मृत्य सर्वं वैयक्तिकं दुःखभारं तमारोग्यसंपन्नं कर्तुं बद्धपरिकरायाः,....राजमातुश्चेन्नम्मायाः षण्मासा अविहितगतदिना एव व्यतीयुः ।

राज्ञश्च शिवलिङ्गरुद्रसूर्यस्य....आ जन्मन एव दुर्बलस्याऽऽबाल्यादेव कृशशरीरस्याऽऽकैशोर्यादेव श्रमाधिक्याखिद्यमानस्य....प्रतिसायमनुभूयमानात् सूक्ष्मात् ज्वरात् लेशतोऽप्यनुद्विज्य यथापूर्वं राज्यप्रशासने सेनासंनहनेऽर्यकारणे च प्रवर्तमानस्य....अकस्मात् साक्षात्कृत्य विमातुश्चित्तपरिवर्तनमादौ परं चकितस्य, संभाव्य तत् स्वसंकल्पसाफल्यसंभावनोत्प्रेक्षामात्रजनितं परं प्रमुदितस्य,....विन्यस्य कर्तव्याकर्तव्यविचारोत्तरदायित्वं समुचितकार्यकरणभारं च समर्थायां तस्यां समुपजाताऽऽश्वासस्य,....बाल्यनिर्विशेषेण विश्वस्तभावेन तस्यारूपदेशानुसारं पानभोजनशयनादिषु प्रवर्तमानस्य,....ओषध्युपचारं तस्याः कृतकं खिद्यमानस्य,....खिन्नं तं दृष्ट्वा सत्यमेव खिन्नां तां सहासं सशपथं प्रसादयतः,....तया सह श्वेतपराजययोजनास्तास्ताः भव्या आहोपुरुषिकया चिन्नवतः,....स्वप्नमनोरमाः दिवास्वप्नतुल्या योजनाः स्वतंत्रभारतस्याभ्युदयार्थं विचारयतः ।

राज्या वीराव्वायाश्च....विलोक्य कुसुमकोमलं स्वपतिं प्रत्यहं प्रशासन-कार्यभारखिद्यमानं स्वयं खिद्यमानायाः....निरीक्ष्य तं प्रतिसायं ज्वरेण सूक्ष्मेण ग्रस्यमानं सचिंताया अपि नवीनत्वाद्वयसः गांभीर्यं वास्तविकं परिस्थिते सकलयितुमसमर्थायाः,....मातृकल्पायाः श्वश्वाः चेन्नम्माया आज्ञानां

परिपालनमेवाऽऽत्मनः परमकर्तव्यत्वेन गणयन्त्याः,....निरीक्ष्य सर्वभारवहन-क्षमां तां परिगहृतीस्वसुतपरिचरणभारां समुपजातोच्छ्वासां,....दृष्ट्वा पतिं प्रसन्नचित्तं स्वयं प्रसीदन्त्याः,....अवलोक्य तस्य किशोरनिर्विशेषं व्यवहारं स्वमात्रा सह सकौतुकं स्मयमानायाः,....नक्तंदिवं परमेश्वरं स्वपत्युः कुशलं याचमानायाः,....पाटलिपुष्पकलिकाया इवोन्मिमेषन्त्यास्तीव्रहैमवाताभि-भूतायाः,....एकादशानधिकवर्षीयायाः ।

स्वामिभक्तानां राजपुरुषाणाञ्च....अवलोक्य राजमातरमादौ विरक्तां पश्चात् पुनःसमुपजातराज्यप्रशासनानुरागां विस्मितानां,....'अल्पवयोऽनुभव-हीनस्य सुलभोत्साहस्य राज्ञः क्षिप्रकारिता राजमातुरनुभवविदग्धेन संचालनेन मर्यादिता राज्यस्य कल्याणायैव स्यात्'-इति भावयित्वा समुपजाताऽऽ-श्वासानां,....स्वस्वकर्तव्यपालने द्विगुणितेनाऽऽवेशेन प्रवर्तमानानां गुरुसिद्दप्पा-सदृशानाम् ।

राजपुरुषाधमानां च....विलोक्य राजमातरं पुनः समुपजातराज्य-प्रशासनाभिरुचिं चकितानां,....एवं सति कथं स्वान्नाम बालनृपसमीपे-ऽस्मादृशानां चाटुल्यावसरः' इति विचिन्त्य खिद्यमानानां,....उपलभ्य राजमातरं कार्यगौरववशादन्यत्र गतां नृपस्य समीपे स्मितमुपतिष्ठमानानां,....तं चाटूक्तिभिः प्रसादयितुं प्रयत्तमानानामपि विज्ञाय तस्य मातृभक्तिं तन्मातर-मुद्दिश्य किञ्चिदपि तत्कर्णयोर्वमितुमपारयतां,....कालमनुकूलं प्रतीक्षमाणानां वेंकटरावसदृशानाम् ।

आंग्लानां च....देशद्रोहिमाध्यमेन गूढगूढेन कित्तूरराज्यस्योन्नति-परामवस्थां कित्तूरराजस्य शरीरावस्थां कार्यकलापं च सततं परीक्षमाणानां,....साक्षात्कृत्य स्वातन्त्र्यप्रियं तेजस्विनं स्वभावं कित्तूरराजस्य तन्मातुश्च येन केनापि निमित्तेन तौ समूलमुत्खनितुमुत्सुकोत्सुकानामपि समुन्नतं कित्तूरराज्यं येन केनापि मिषेण येन केनापि निमित्तेन साम्राज्ये स्वे विलाययितुमातुरातु-राणामपि दक्षिणापथनृपान्तरप्रतिकूलप्रतिक्रियाऽऽशंकया तथाकर्तुमधृष्णु-

वतां,....कित्तूरराजस्य निरंतरं सेनासंनहनोद्यमं साशंकया दृष्ट्याऽवलोक-यतां,....तद्विग्रहनिमित्तं पर्याप्तं किञ्चिदपि गवेषयतां,....प्रतिपत्रं कठोरतामधिगच्छन्त्यां भ्रष्टायां कर्णाटभाषायां लिखितानां पत्राणां माध्यमेन कित्तूरराजं कदाचित् सांवत्सरिककरद्रव्यं कदाचित् तदराजपुरुषाणामुद्वर्तनं कदाचित् स्वसाम्राज्यसीमाभिभवनं कदाचित् लुण्ठकाभयप्रदानं-यत्किमपि सत्यमसत्यं सबलं निर्बलं कारणम्-अधिकृत्य पारस्परिकं संबंधं दूषयताम्।

कित्तूर राज्यप्रजाजनानां च....निशम्य कर्णोपकर्णिकया स्वं प्रियदर्शनं बाल्वयस्कं नृपं रुग्णं चिंतितानाम्,....'अपि नाम यत्किञ्चित्कारिणी नियतिरस्मान् सुशीलेन वीरेणानेनाऽपि वियोजयेत्' इति खिद्यमानानां,.... दृष्ट्वा चिरपरिचितां राजमातरं मातृनिर्विशेषां पुनः प्रशासनकर्मणि प्रवृत्तां समाश्वस्तानां,....'सर्वथा देवताः स्वतिकरिष्यन्ति' इति विचिन्त्य स्वे स्वे कर्मणि यथापूर्वं प्रवृत्तनाम् ।

आरभत च कित्तूरराजस्तथा परिचर्यमाणो मात्रा शनैः शनैः लब्धुं मुक्तिमिव तस्मात् सूक्ष्मजीर्णज्वरात् ।

उपलभ्य तं समाचारं....अमन्येतां प्राणानिव स्वान् पुनरागतान् राजमाता राजपत्नी च ।....अमोदन्त गुरुसिद्दप्पादयः प्रधानाः राजपुरुषाः सामान्याश्च प्रजाजनाः । अन्वभवन् खेदं गूढं नैराश्यं प्रच्छन्नं वेंकटरावादयो गौरास्तत्प्रभवश्च ।

परन्तु....स तेषां समाश्वासः, स मोदः, स खेः सहसा वैपरीत्ये परिणनाम....अचिरादेव....अधिगत्य राजानं क्षीणक्षीणावस्थं....एकस्मिन् प्रभाते निरीक्ष्य शतघ्नीनिर्माणशालां प्रासादं प्रतिनिवर्तमानं, मार्गे एव सहसा तांव्रेण ज्वरेण कफातिरेकेण चाऽऽक्रांतमतिरुग्णावस्थम् ।

निरपद्यत च स्थायिभावे शीघ्रमेव ।

अथ एकदा....अपारयतीव द्रष्टुं तस्य किशोरवयसः नृपस्य क्षयक्षीणां

शरीरावस्थां दयनीयां पश्चिमांबुनिधौ निमज्जति भगवति भास्वति, निःश्वास इव कित्तूरराज्यश्रियः परिकल्प्य पतिवियोगमवश्यंभावेनं दुखिताया मंदं मंदं वहति सायंतने पवने, द्रष्टमिव दृढं संकल्पं नीवनं कित्तूरनृपस्य कार्यरूपेण परिणममानं रुग्णकक्षे निवाते शान्ते विविध कुसुमसुवासिते प्रादुर्भूते प्रशान्ते निश्चले घृतदीपे, आश्वासयितुमिव इहलोकाज्जिगमिषु कित्तूरनृपं प्रसरत्सु सायंतने आनाम्रे गगनांगणे सायंदेवस्तवनगीतेषु राजकुलदेवतायतानात्, अवलोकयितुमिवावस्थां तस्य सौत्सुक्यं कुतोऽप्यावतरत्सु नक्षत्रेषु....राजा शिवलिङ्गरुद्रसूर्यः अस्थिमात्रशेषः, रुग्णशय्यायां मृदुलायां मुद्रितलोचनं निश्चलं शयितः समुन्मील्य ज्वराऽऽरक्ते किञ्चिदुच्छ्ने विलोचने, क्षीणक्षीणेन स्वरेण स्वमातृ-दिदृक्षां तीव्रां कथमप्यसुसूचत् । यदा च समीपवर्तिता विज्ञायेच्छां स्वामिनस्तत्क्षणमेव प्रधावितेने सेवकेनानुरुद्धा, राजकुलदेवताऽऽयतनात् सद्यः प्रतिनिवृत्ता राजमाताऽविलंबमेव तत्संनिधौ आजगाम् सचिंता तदा व्यानक् सहसा विस्पष्टेन स्वरेण, धृत्वा तद्हस्तं कंपमानं हस्तयोः सोण्मणोः, स्वामिच्छां धर्मशास्त्रोक्तेन विधिना दत्तकपुत्रपरिग्रहस्य ।

राजमाता तु, निरीक्ष्य पीतदीपप्रकाशे पीततरमाभासमानं रुधिरहीनं उच्छनकपोलकुल्यमुच्छुष्करदनच्छदं मुखं लोचने चाभिज्ञे इव आसन्नस्य यमराजस्य प्रशान्तै पुत्रस्य विदीर्यमाणहृदयाऽपि कृतकस्मिताऽऽवृतमनोभावा सोल्लुण्ठवचना कृत्कपरिहासमुखरा, आदौ नैव स्वीचकार तद्वचनम् । अंगीचकार व महता कष्टेन, तेन पुनः पुनरनुरुध्यमाना, आमंत्रयितुं गुरुसिद्दप्पादीन् प्रधानान् राजपुरुषान् विचारयितुं तः सह तं विचारम् । आमंत्रयामास च तान् तस्मिन्नेव कक्षे प्रहरमात्रक्षीणायामक्षणदायां क्षणदायाम् ।

यदा तु प्रारम्भ एव द्वितीयस्य नैशप्रहरस्य कन्नूरमल्लप्पा-कन्नूरखीरप्पा-सुबेदारमल्लप्पा-गुरुसिद्दप्पादयः प्रधानाः राजपुरुषा, आदित एवं सचिन्ताः प्राप्य राजमातुस्तदामंत्रणमनिष्टाशंकातुरास्त्वरमाणहृदया अपि प्रदत्तसमयात्

प्रागुपस्थातुं भीता अधारास्तस्मिन् नीरवे बृहति कक्षे प्रशान्ते स्वस्वामिनः सेवायामुपतस्थुस्तदा ते स्वं नृपं किशोरवयसं, कंकालमात्रावशेषमुपवेष्टुमपि तदाभवादनानि स्वीकर्तुमपि अस्मर्थमवलोक्यावसन्नधैर्याः किञ्चिदपि वक्तुं न शेकुः,....राजमात्रा समीपे रुग्णशय्याया मूर्तिवदुपविष्टयाऽनाकलंनीय-भावनया मूर्तयेव वेदनया भारतमातुः नृपाभिलषितमधिकृत्य संबोधिताः न स्वीचक्रुः कर्तव्यभारं,....अङ्गीचक्रुश्च तथा कर्तुं....विलोपितप्रतिरोधाः स्वस्वामिनः करुणकरुणेन दृग्पातेन । अधिचक्रुश्च निःशब्देन एकमत्येव स्वमध्यात् गुरुसिद्दप्पामहोदयं गन्तुं सिंघोली-मस्तमर्दी-खोडनपुरग्रामान् आनेतुं च ततः पंच षड्वा सुयोग्यान् सुलक्षणान् कुलीनान् बालकान् स्वामिनोऽवलोकनार्थं तन्मध्याच्च स्वोत्तराधिकारिचयनार्थं च ।

गुरुसिद्दप्पाऽपि, अनुभूय स्वामाशामेवं घोरनिराशायां परिणतामवसन्न-गात्रोऽपि, समवलोक्य राजमातरमन्तरुद्वेल्लच्छोकसागरामपि विचालितां स्वयमपि कृतधैर्यावलंबः, हातुं स्वामिसान्निध्यं क्षणमात्रमनिच्छन्नपि अंगीकृतकार्यगौरवं मनसिकृत्य सुयोग्योत्तराधिकारिगवेषणाय बद्धपरिकरः, कृतकोत्साहनिगूहितमनोऽवस्थः प्रणम्य स्वामिनं स्वामिमातरं च तस्मिन्नेव समये कतिपयैः सैनिकैः सह ततः कृतप्रस्थातः, राजाज्ञानुसारं गत्वा सिंघोली-मस्तमर्दी-खोडनपुरग्रामान्, प्रेक्ष्य तमत्यान् अनुभववृद्धान् ग्रामप्रमुखान्, निवेद्य तेभ्यः नृपसंकल्पं, विवेकिनां तेषां साहाय्येन कुलीनान् शुभलक्षणोपेतान् विनीतान् सुसंस्कृतान् चतुरो बालकान् स्वयं चिकाय, प्रत्याजगाम राजधानीं तैः सह शीघ्रमेव, उपस्थापयामास च तान् राजमातुः समक्षम् ।

राजमाताऽपि, समवलोक्य तान् संतुष्टा, लब्ध्वा स्वस्नुषायावीराव्वायाः सहमतिं, अन्येद्युः प्रातरेव, सुप्रोत्थितरयोत्थितोपविष्टस्य प्रसन्नस्य कृतदुग्धपानस्य समाकर्ण्य गुरुसिद्दप्पाप्रत्यागमनवार्त्तामुत्सुकोत्सुकस्य, परिचारकेण सह किमपि किमपि स्वैरं संलपतः स्वपुत्रस्य संमुखं तान्

समुपस्थापयामास ।

राजा शिवलिङ्गरुद्रसूर्योऽपि, निरीक्ष्य तान् बालकान् आरोग्यसम्पन्नान् सस्मितवदनकमलान् निर्भीकनयनान् आत्मविश्वासदीप्तमुखान् संतुष्टः, सुविचार्य, तन्मध्यादेकं शिवलिङ्गप्पानामानंबालकं, मस्तमर्दीग्रामस्यास्य बलप्पागौडस्याऽऽत्मजं, सर्वोत्कृष्टत्वेन निश्चिकाय, स्वीचकार तं स्वदत्तक-पुत्रत्वेन, आदिदेश च तदनुकूलां यथायोग्यां घोषणां सडिंडिमनिनादं राज्ये कर्तुं सूचयितुं च सर्वेभ्यः शासकेभ्यो यत् स एव बालकस्तं सरदसाई-सरदेशपाण्डे-नदगौडत्वेन, तदुत्तराधिकारितया, अनुसरिष्यतीति ।

निशम्य तां घोषणां नगरचत्वरेषु ग्रामेषु ग्रामटिकासु....सर्वत्रैव राज्ये....सडिंडिमनिनादमुद्घुष्यमाणां महान् खल्वनायत हर्षः मनसि कित्तूरराज्यप्रजाजनानां,....विषादोऽपि ।

'उपलब्धोऽस्माभिः भावी त्राता' इति साक्षात्कृत्य हर्षः । प्रतीयतेऽस्माकं स्वामी अल्प एव वयसि परलोकयात्राप्रस्थानोद्यत'-इति संभाव्य विषादः ।

एवं विनिश्चित्य स्वोत्तराधिकारिणं कृतकृत्यस्यापि हातुमिहलोकम-परिसमाप्यैव स्वं महत्तमं कर्तव्यमनिच्छोः, दर्शं दर्शमविचलितगांभीर्यामपि स्पष्टानुमेयशोकाऽतिरेकां मुखमुद्रां मातुः खिद्यमानस्य, संचित्य नियतिविनिश्चितं वैधव्यदुःखं पत्न्याः एकादशमात्रवर्षीयायाः अननुभूतपतिसुखायाः परं तप्यमानस्य, पतित्वा रुग्णशय्यायां-कदाचित् पितुरेव तथा दिवंगतस्य सास्रं स्मरतः, कदाचित् तन्मृतिकारणस्य स्वयं पदात् तथा भ्रंशितस्य बाजीरावस्य विषय एव सकुत्सं चिंतयतः, कदाचित् आंग्लोन्मूलनोपायानेव तांस्तान् परिकल्पयतः, कदाचित् मात्राऽन्तर्गूढधनव्यययाʼ सह तान् सावेशं चर्चयतः, कदाचित् स्वदत्तकपुत्राध्ययनसुविधा एव तास्ताश्चिंतयतः, कदाचित् 'अपि नामाऽयं तातपादस्य मम चापरिपूर्णं मनोरथं पूरयेत्

स्वपराक्रमेण स्वबुद्धि विभवेन च' इति तर्कयतः, कदाचित् 'आकृतिरेवास्य कथयति अस्य भाग्यशालित्वं पराक्रमित्वं कृतित्वं चेति आत्मानमात्मनैव समाश्वासयतः, कदाचित् स्वसंनिधौ समुपविष्टायाः धौतधवलवस्त्रायाः भस्मचर्चितभालपट्टायाः रामायणादिकथाः परमपावनीः तं भावयन्त्या मातुर्विषये 'कथमिवेयं, नियत्या तातपादैरादित एव वियोजिता, विना मया प्राणान् धारयिष्यन्ति' इति खिद्यमानस्य, कदाचित् 'यदि हि मम भ्राता शिववासवराजोजीवितोऽभविष्यत् तर्हि स एवास्याः राज्यस्य च जीवनावलम्बोऽभविष्यत् मम पश्चात्' इति तर्कयतः कदाचित् 'महासत्त्वेयं सोढ्वा इममपि आघातं स्वकर्त्तव्यकरणाय परिकरं स्वं भन्त्स्यति इति स्वात्मानं समाश्वासयतः, कदाचिन्नीरजमात्मानं विभाव्य हृष्यतः, कदाचित् क्षीणतरतां प्रत्यहं गच्छत् स्वं हस्तपादं समवलोक्य दुर्मनायमानस्य, सदाऽऽवस्थां स्वां प्रतिदिनं भ्रश्यन्तीमन्येभ्यो गोपायितुं प्रयतमानस्य, सदा ओषधिपानतत्परस्य राज्ञः शिवलिङ्गरुद्रसूर्यस्यद्वित्रा मासा लोहपादा इव व्यतीयुः ।

अनुभवंश्चान्तं स्वजीवनहतकस्याल्पस्य समीपमुपस्थितं स एकदा अन्तमुपगते वर्षर्तौ प्रकटयामास महता कष्टेन स्वामिच्छां शीघ्रमेव गृहीतुं चित्तपूर्वं बालकं स्वतनयत्वेन धर्मशास्त्रोक्तदत्तकविध्यनुसारं पुरतः स्वमातुः समीपे निःशब्दमुपविष्टया विषण्णया दृष्ट्या वातायनाद्बहिः किंचिद्दृश्यं सूर्यास्तं विमनस्कतयाऽवलोकयन्त्याः ।

राजमाताऽपि, निशम्य रहसि राजवैद्यमतं 'अयं मम पुत्रकः कतिपयदिवसानामेवातिथिरिहलोकस्य' इत्यादित एव समुपजातप्रत्यया, स्वीचकार तं तस्य क्षीणक्षीणमनुरोधं, आदिदेश च कृतकस्मितोज्ज्वलया मुखमुद्रया समीप एव मूर्तिमिव निश्चलमुपविष्टं नतमस्तकं श्रान्तनयनं हिंमतसिंहमायोजयितुं दत्तकग्रहणसमारोहं गुरुसिद्दप्पादिराजपुरुषसाहाय्येनाविलंबमेवाऽऽमंत्रयितुं च सर्वान् ग्रामप्रमुखान् प्रमुखान् नागरिकान् उच्चावचान्

राजपुरुषांश्च तदवसरे ।

अथ शीघ्रमेव, एकस्मिन् शुभे मुहूर्ते, राजकीयेन नक्षत्रविद्यापण्डितेन सुविचार्य ग्रहयोगं समुपलभ्य तं सर्वथा प्रतिकूलमादौ चिन्तामग्नेन ततः सुविचार्यात्यावश्यकतां दत्तकविधिसंपादनस्याऽगतिकेन पर्यवस्थाप्याऽऽत्मानं कथमपि विनिश्चिते, प्रातः, साक्षाभवितुमिव दत्तकग्रहणसमारोहस्य पुरुषप्रमाणवातायनशलाकाऽन्तरालप्रविष्टमहार्हभूतलाऽऽस्तरणनिपतितस्वकरव्याजेन राजसभाकक्षान्तः समुपस्थिते बालसूर्ये, सेवकैः दत्त्वा हस्तावलंबं रुग्णकक्षादानीय सिंहासने समुपवेशितः, परिश्रमेण तावताऽपि श्रान्तोऽपि ऊर्ध्वश्वासोऽपि उल्लसितचित्तः स्नातः परिगृहीतराजोचितवेषः कुंकुमतिलक-भूषितभालपट्टः सभाकक्षोपस्थितसभ्यवृन्दखिन्नलोचनैकलक्ष्यीभूतः राजा शिवलिङ्गरुद्रसूर्यः मुकुलितहस्तं प्रणम्य स्वामिनं कलिमयस्वसमीप एव मृगचर्मण्युपविष्टं गंभीरमुखमुद्रं स्वीकृत्य च प्रणामान् राजपुरुषाणां हिंमतसिंह-नरसिंहराव-गुरुपुत्रवीरप्पा-कन्नूरमल्लप्पा-गुरुसिद्दप्पा-वेंकटरावादिप्रमुखानां, तदनुमतः, स्वीचकार समुपस्थितवेदशास्त्रविद्वद्ब्राह्मणोपदिश्यमानेन शास्त्रसंमतेनविधिना स्नापितं धृतोज्ज्वलवेषं साक्षतकुंकुमतिलकभूषितभालपट्टं विनतं तं बालकं स्वतनयत्वेन ।

अलंचकार तं कंपमानाभ्यां स्वहस्ताभ्यां कित्तूरराजचिह्नेन ।

प्रोद्घोषयामास तं क्षीणक्षीणेनाप्यावेगतीक्ष्णेन स्वरेण 'सवाईमल्लसूर्य' इत्यभिधं नूतनं कित्तूरराज्यनृपम् ।

आदिदेश च तं प्रणंतुं कलिमयस्वामिनं पितामहीं मातरं समुपस्थितान् विप्रवरेण्यान्, स्वीकर्तुं तदाशीर्वादम्,....प्रणामांश्च समुपस्थितानां सर्वेषां नगरश्रेष्ठिनां राजपुरुषाणां च ।

अनुष्ठाय यथाऽऽदेशं पुनः पितुरुत्सङ्गे समुपविष्टे तस्मिन् बालनृपतौ, परिवाहयन्निव भावनोद्रेकमुपस्थितानां सर्वेषां सभ्यानां दुःखजडानां

सामुनयनानां मूकानां गुरुः सिद्दप्पा सहसा स्वासनात् उदतिष्ठत् । उद्घोषयच्च गद्गदेन भावविह्वलेन स्वरेणाऽऽत्मनः राजभक्तिं यावच्चंद्रदिवाकर-स्थायिनाम् ।

अनुसृत्य च तदुदाहरणं सर्वः राजपुरुषवर्गः श्रेष्ठिवृंदश्च ।

....राजकुलघटनामिमां दत्तकपुत्रग्रहणस्य चर्चयतां कित्तूरराज्यप्रजा-जनानां, भर्तृवियोगं समासन्नं परिकल्पप्य दुःखजडानां राजपुरुषाणां, अविगणय्य शरीरग्लानिं स्थितप्रज्ञसमेन गाम्भीर्येण परलोकयियांसुं पुत्रं स्वं सततमुपचरन्त्याः राजमातुचेन्नम्मायाः, छायाया इव सा तत्समीपवर्तिन्याः दुःखबधिरमानसायाः राजपत्न्याः वीराव्वायाः, समीपोपविष्टस्य गंभीरमुख-मुद्रस्य मृत्युञ्जयजपव्यापृतस्य तपस्विनः कलिमथस्वामिनश्च दिनानि त्रीणि अक्षणदानि युगानीवापासरन् ।

अथ समासन्नप्रायेऽवसाने चतुर्थ्याः निशायाः क्षीणचंद्रायास्तमो-बहुलायाः, प्राप्तकल्पे ब्राह्मे मुहूर्ते, अनुभवस्तु तात्कालिकीं दुःखमुक्तिं निमज्ज्य निद्रासागरेऽतले श्रांतेषु क्लांतेषु राजपरिवारजनेषु,....राजा शिवलिङ्गरुद्रसूर्यः सहसाऽजागः प्रशान्तनिद्रायाः बहोः कालादनन्तर-मनुभूतायाः,....उद्घाटयत् निस्तंद्रे विगतज्वरसन्तापे प्रसन्ने द्विगुणितशक्ति-नीवातिस्पष्टदर्शिनी अक्षिणी,....व्यापारयामास ते, शयनपतित एव, अचलित एव, अमितः स्वं विशालं रुग्णकक्षं तिरोहितरत्नप्रदीपप्रभामंदाऽऽ-लोकाऽऽलोकितं नीरवं मंदनिशान्तसमीरदोधूयमानवातायनकौक्षेयकं निद्रितमिव मृतमिवोपेक्षितान्तकदूताऽऽगमनभयभाराऽऽक्रान्तमिव भासमानमेकदेशसुप्त-श्रांतराजवैद्यम्,....अवलोकयामास च स्वशय्यायाः समीप एव तन्द्रितामिव विचारमग्नामिव विलुप्तस्थलकालव्यक्तिविवेकामिव निश्चलं निःशब्दमुपविष्टां, श्रान्ताभ्यां निरन्तरजागरणाऽऽरक्ताभ्यां लोचनाभ्यां निःस्पन्दाभ्यां कदाचि-न्निधाय तदुत्संगे विलुलितालकं मस्तकं निश्चिन्तं प्रसुप्तं, विवक्षयेव प्रस्फुरदारक्तौष्ठपुटं, प्रमृष्टतिलकं बालं सवाईमल्लसूर्यं, कदाचिन्निधाय

मस्तकं विलुलितवेणि एकदेशे रुग्णशय्याया गाढं सुप्तां, स्वप्नमिव कंचित् सुखदं पश्यन्त्याः स्वबालस्नुषायाः सस्मितां मुखमुद्रामवलोकयन्तीम्, अधःप्रसूखलितशिरोंऽशुकां, स्निग्धकरुणमुखमुद्रां, मूर्तिमतीमिव मातृममतां, शरीरिणीमिव मातृवेदनां, विग्रहिणीमिव कुलभूतिं मातरम् ।

तन्मुखनिगडितलोचन एव च शनैः शनैः-महता कष्टेन-समुत्थाप्य स्वं दक्षिणं क्षीणमवशमिव हस्तं तां पस्पर्श किंचिन्मणिबंधे ।

साक्षाच्चकार च तां तस्मिन्नेव क्षणे तन्मुखवलितनयनामाहार्यस्मित-तिरोहिताऽऽन्तरिकवेदनां, जलपिपांसुमिव तमनुमाय रजतपानपात्रेण तं जलं पाययितुं प्रवृत्ताम् ।

निवारयामास तां तथाकरणात् ।

जगाद च शनैः शनैः - 'मातः!....गच्छामि अहम् ।....क्षंतव्यः.... अहम् ।....महत् खलु मया....मूढेन....अपराद्धम् । भवत्या.... भारतमातुश्च....। स्वजनान् परकीयजनसाहाय्येन पातयित्वा ।....क्षन्तव्यः.... अम्ब!....क्षन्तव्यः । उपकर्तव्यश्च....वचन....प्र....प्रदानेन....(निद्रितं सवाईमल्लसूर्यं तिर्यक्दृष्टिपातेन कथंचिद्विनिर्दिश्य-) अमुं....मम पुत्रकं मन्निर्विशेषं संवर्ध्द....अस्य माध्यमेन निष्कास्य मातृभुवः परकीयान्.... त्वं मह्यं....शक्तिमनन्तां प्रदास्यसि इति ।....उपकर्तव्यः।'

वदंश्चैवं क्षीणस्वरं सहसाऽनुबभूव तद्धस्तं कम्पमानं स्वे निरस्तज्वरे भालप्रदेशे न्यस्यमानम् ।

अनुभवंश्च तया निःशब्दं प्रदीयमानं वचनं बभूव समाश्वस्तः ।

गृह्णानश्च तं तस्याः हस्तं निपतदश्रुबिन्दुक्लिन्नं स्वहस्तयोः सहसा पुरुरूज्ज्वलितचैतन्ययोरिवाकस्माद् बलवतोः....प्रविवेश....अपरस्मिन्नेव क्षणे....कालनिद्रायां....मातृमुखविनिगडितलोचन एव ।

'शिव!....शिव!'-सहसा चुक्रोश सा राजमाता....प्रयतमानेव तं बोधयितुं तस्याश्चिरनिद्राया: ˙

'शिव!....शिव!'-सहचुक्रोशाऽनाथा च कित्तूरराज्यलक्ष्मी: ।

'शिव!....शिव!' घर्घराक्षरमुच्छुष्कस्वरमुवाच बन्दिनी चेन्नम्मा, शयनपतिता, बलात् प्रत्यानीयमाना वर्तमाने काले सहसा कर्णविषयतामुपगतेनधूत्कारेणधूत्कारेण दिवाभीतस्य कारागृहस्यान्यतमे कक्षे निर्जने कृतावासस्य । अविश्वसतीवस्वस्थितौ सुचिरमवलोकयामास स्वकरतलगतमलातप्रकाशे तस्मिन् मंदं मंदं प्रकाशमानं चेष्टमानमिव किमपि तां कथयितुं-रत्नांगुलीयकम् । स्नपयामास तद्धृत्वा वक्षसि पञ्जरमात्रावशेषे जीर्णमलिनाञ्चलाऽऽवृते चिरम् अर्द्धमीलितयोरुत्तप्तयौ: श्रान्तयो: आरक्तयो: लोचनयो: अन्तरुद्वेल्लन्तीभि: निरन्तरं निपतन्तीभिरश्रुधारामि: । परिचुम्ब्य च शुष्काभ्यामुत्तप्तनि:श्वासक्लान्ताभ्यामोष्ठाभ्यां सुदीर्घं....गूहयामास तत्पुरप्यध: उपबर्हस्य कठिनस्य मलिनस्य....गदन्ती किमपि किमप्यस्फुटाक्षरम् ।

अनुभवन्ती च पुरप्येकवारं तृषां....तीव्रां तृषां....प्रज्वलयन्तीमिवो दरहतकं....प्रसारयामास हस्तमधिकमेव कम्पमानं,....जग्राह कथमपि समीपवर्ति अर्द्धभृतं जलभाण्डम्, आचामत किंचिज्जलं कटुष्णं महता प्रयासेन ।

आचम्य च यावत् तद्भूमौ स्थापयति तावच्छुश्राव कारागृहप्रांगणवर्तिशाखिशखानिलीनस्य खण्डितनिद्रस्य शुकस्येव कस्यचिद्भयतीक्ष्णं विरुतम् ।

अकस्माच्च स्मारिता तस्या....रुग्णकक्षे तस्मिन् संस्थापितपंजरस्य स्वपुत्रप्रियस्य शुकस्य निशायान्तस्यां तथा खण्डितनिद्रस्य तथा विरुवत:.... सहसा इयेष गन्तुं पुनरपि तस्य वातायनस्य समीपेऽवलोकयितुं बहि:.... बहि:....दिशि तस्या: प्रियस्य कित्तूरराज्यस्य....घ्रातुं गन्धवहस्य गन्धं

तस्याः प्रियस्य कित्तूरराज्यस्य दिशाया आगच्छतः....श्रोतुं च शब्दान् तस्याः प्रियस्य कित्तूरराज्यस्य दिशायाः श्रूयमाणान् ।

इयेष!....न तुशशाक....अर्द्धोत्थिता ।

विगलितसामर्थ्याविव विलुप्तचैतन्याविव विनष्टबलाविव हि पादौ तस्याः काष्ठसमौ न पारयामासतुः....प्रेरितावपि तया बलात्....उत्थापयितुं पुनरप्येकवारं तस्याः क्षीणं शरीरम् ।

साक्षात्कृत्य तदननुभूतचरमवशित्वं क्षणमात्रं हतबुद्धिः क्षणमात्रं विस्मिता क्षणमात्रं विषण्णा सा, क्षणमात्रानन्तरमेव विहस्य तत्याज तामिच्छाम् ।

निःश्वस्य च दीर्घं, विचार्य किमपि स्वात्मनैव, विषण्णास्मिता, शाययति स्म शरीरं स्वं तस्यां कठिनायां मलिनायां मत्कुणबहुलायां शय्यायां....गदन्तीनाम किमप्यस्पष्टाक्षरम् ।

काकतालीयने संमुखीना च कक्षकोणेऽधिकमेव सधूमं ज्वलतः आरक्तपीतस्यालातस्य....बबन्ध तस्मिन् स्वां दृष्टिमन्यमनस्कां क्षणमात्रम्। असहमाना च तत्प्रकाशं नेत्रदाहकं मर्मपीडकं व्यावत्रयामास अन्यस्मिन्नेव क्षणे ताम् ।

कृतकुक्षिपरिवर्ता च निमीलयामास तां क्षणमात्रम् ।

अशक्नुवती च तदपि कर्तुं....उन्मीलयामास ताम् ।

बबन्ध च तां संमुखीनकाराकक्षभित्तौ भीषणं नृत्यंतीषु छायासु.... विमनस्का....प्रयतमानेव पुनर्द्रष्टुं घटनाक्रमं तस्याः पुत्रस्य शिवलिंगरुद्रसूर्यस्य निर्वाणादनन्तरं....पश्यन्त्या एव तस्याः....रोद्धुं प्रयस्यन्त्या एव तस्या.... वेगेन घटितमकल्पितेन ।

## (षष्ठः परिच्छेदः)

'सूर्य!', उवाच राजमाता मलिनवसना मूर्तिमतां मातृहृदयवेदना चेन्नम्मा, तस्मिन्नेव रुग्णकक्षेऽनास्तृतायां रिक्तायां भूमौ स्वसमीप एव संमुखं मृद्दीपकस्य निष्कंपं ज्वलतः समुपविष्टं मुण्डितमस्तकं धवलवाससं विषण्णं बालनृपम्....अवलोक्य स्वविश्वासाऽऽस्पदं राजपुरुषमेकं तया कन्नूरमल्लप्पेन सह धारवाड़स्थितस्यांऽऽग्लाधिकारिणः संनिधौ परेद्यवि सह कित्तूरराजलिखितसूचनापत्रेण संप्रेषितं....कक्षेऽवनतमस्तकं प्रविश्य कोणे निःशब्दं तिष्ठन्तं...., 'गच्छ कलिमथं सईदेन सह, पृच्छ तत्र कार्यरतान् कन्नूरवीरप्पादीन् राजपुरुषान् 'अपि नाम संनद्धोमठः स्वीकर्तुं चिताभस्म दिवंगतस्य राज्ञः इति, आकत्य च कथय मह्यम् ।'

'यदाज्ञापयति माता'-इत्युक्त्वाऽपसृते कक्षात् बालनृपे, स वृद्धोऽधिकारी, समीपतरमुपसृतोऽधोमस्तकः, राजमात्रा निःशब्दमुखरया दृशैव पृष्टः, मंद्रं मंद्रं प्राह - 'राजमातः!....श्वेता इमेऽसदाशया इव लक्ष्यन्ते । कुटिल इव एषां व्यवहारः । अपायप्रवणा इव एषां मनोवृत्तिः ।'

आज्ञप्तश्च तया सविस्तरनिवेदनार्थं प्रारभत निवेदयितुं,....'दत्तकपुत्र-ग्रहणसमारोहादनन्तरमेवाऽत्रभवत्या 'आंग्लाधिकारिणे स्वयं प्रदेयम्' इति संदिश्य प्रदत्तं तत्सूचनापत्रं गृहीत्वा कन्नूरमल्लप्पा सशस्त्रांगरक्षकसहितेन मया सह इतः धारावाडनगराय तस्यां समारोहसंध्यायामेव प्रातिष्ठत ।'

'गूढविचारमग्न इव निःशब्दं प्रवसन् सः, निशीथे ग्रामे कस्मिंश्चित् कृतविश्रामः, अपरेद्युः प्रातरेव धारवाडनगरं प्राविशत् । गृहे कस्यचित् तन्मित्रस्य कृतनिवासः समापितनित्यक्रियः, विहाय मां स्वायं स्नानादिनित्यकर्मानुष्ठानव्यापृतमेव, प्रयोजनान्तरव्याजेन प्रहरमात्रं कुत्रचित् एकाक्येव गतः, प्रत्यागत्य, व्यपगतचिंताभर इव, परिपूर्णमनोरथ इव, प्राप्तप्रायप्राप्तव्य इव प्रहृष्टवदनः, सोत्साहं जल्पन् सह मया, प्रदर्शयन्

मां, धूपिादमिव, तान् तान् विस्तृताऽऽरामकुण्डलिततया दुर्लक्ष्यप्रायान् निवासान् तत्रत्यानां श्वेतानामधिकारिणां सगर्वमिव, आंग्लाधिकारिणः थूकरे-इत्युपाह्वस्य निवासाय प्राचलत् । प्रविश्य च तं चिरादभ्यस्त इव स्वागमनं तस्मै सेवकमुखेनासुसूचत् । अपेक्षमाणेन इव तदागमनं (- अहो आश्चर्यम् -) तेन तस्मिन्नेव क्षणे समाहूतो मया सह विशाले तस्य कार्यकक्षे प्राविशत् ।'

'तच्चरणसेवक इव विनतमस्तकं प्रणम्य बहु चाटु जल्पन्, तद्दासानुदासइवाऽऽहार्यहासोकज्ज्वलमुखारविन्दः, चालयन् लांगूलं स्वमदृश्यं, तस्मै अत्रभवत्याः सूचनापत्रं प्रादात् ।'

'स आंग्लः अधिकारी तु गर्वोद्धतः, समुपेक्ष्य प्रणामान् चाटुवादांश्च तस्य, समादाय तत्पत्रं, पठित्वा तत् पुनः पुनः, चिरमस्यात् गूढविचारमग्नः दशन् स्वमधरोष्ठम् । क्षणमात्रं कृतदृढनिश्चय इव कठोरतरमुखमुद्रः, क्षणमात्रं विज्ञातस्वकर्तव्य इव प्रसन्नमुखमुद्रः, क्षणेऽन्यस्मिन्नेव कृतकेन चिंताभावेनापह्नुत्य स्वाभाविकीं तां मुखमुद्रां, सह साऽपृच्छत् - 'कथं युष्माकं राजा' इति ।'

'विज्ञाय च कृतकचिन्तादुर्मुखात् कन्नूरमल्लप्पात् यदत्यवस्थो नूनं स इति, उपहसन्निवावोचत् - 'मूर्खाः खलु युष्माकं वैद्याः ।....प्रेषयामो वयमधुनैव अस्माकं वैद्यराजं....आंग्लं वैद्यराजं....चिकित्सार्थं युष्माकं राज्ञः । .... (निबध्नन् दृष्टिं सोपहासामिव स्वां दृष्ट्वा मम तन्मुखवस्थिरया) .... यदि नाम सोऽपि तं रोगान्मोचयितुं न शक्ष्यति तर्हि निरपवादं विश्वसय न कोऽपि शक्ष्यति मोचयितुं तं पाशेभ्यो (सफुल्सितस्मितं) युष्माकं यमस्य इति ।'

'गंधश्चैवमाह्वयत् तत्रत्यं सर्वप्रमुखमांग्लवैद्यं, बेल्-इत्युपाह्वं, आज्ञापयच्च तं द्रष्टुमवस्थां अस्मत्स्वामिनः अविलंबमेव ।'

'अस्मांस्तु स अज्ञापयत् तत्रैवाग्निमान् तन्निर्देशान प्रतिपालयितुम् ।'

'उत्सुकः प्रत्यागन्तुमिह स्वामिचरणयोश्छायायामहं इयेष तदाज्ञामुक्रंघ-यितुम् । परंतु-कृत्वा मनसि कार्यगौरवं न तथाऽकरवम् ।'

'स आंग्लवैद्यः', प्राह राजमाता मृद्दीपकनिबद्धदृष्टिः, 'आगतः अत्रान्तमुपगते तस्मिन् दिवसे ।....आगतः अत्र परित्यज्य पांचभौतिकं शरीरं गते वत्से ।....आगतभ्यात्र....विज्ञाय वार्त्तां शरीरपरित्यागस्य परं खेदं दर्शयामास ।....प्रार्थयामास चानुज्ञां मम....परीक्षितुं तस्य शरीरम् ।.... तान्तु नाहमदाम् ।....सद्यः स्नापितं अग्निसात्कर्तुं संस्क्रियमाणं वत्सस्य शरीरं स्प्रष्टुमनुज्ञां म्लेच्छाय (....स्वान्नाम स वैद्यः-) दातुं नैवाहमियेष ।'

'नैव इयेषाहं अवमन्तुं तत् तत्स्पर्शदोषेण ।'

'कियान् क्रुद्धः बभूव सः ज्ञात्वा मन्निषेधम् ।....अवमानितमेव स्वात्मानममन्यत सः ।....क्रुद्धः....आरक्तमुखः....'विप्रकृतवानरमुखश्च.... विचार्य किञ्चित् विनिश्चित्य किञ्चित् प्रातिष्ठत इतः....सद्योविस्मृतखेदः.... सकुत्सं स्मयमानः ।'

'अतएव नूनं स आंग्लः अधिकारी तथाऽवर्तत व्यतीते सायंकाले'- जगाद स वृद्धः राजपुरुषः ।

व्यतीते हि सायंकाले स आह्वयत कन्नूरमल्लप्पं स्वसेवकमुखेन द्रष्टुं तमविलम्बमेव ।....प्रतिक्षणमाणस्तदामंत्रणमादिवसं कन्नूरमल्लप्पा आतुरातुर इव तत्क्षणमेव तन्निवासाय प्राचलत् ।....अहमपि तेन सह ।.... परन्तु न जाने किमिति....कन्नूरमल्लप्पा न्यवारयन्मां तथाकरणात्, अगदच्च- 'मित्र!....एतदामंत्रणं ममैव कृते ।....अतस्त्त्र गमनं ममैवोपपद्यते । अनामंत्रितमपि स्वसमक्षमुपस्थितं त्वां दृष्ट्वा स आंग्लः अधिकारी क्रुद्धयेन्नूनम् ।....तया सति च महती कार्यहानिः ।....सर्वसमर्था खलु ऐ आंग्लाः ।....तत् तिष्ठ त्वमत्रैव । परिपालयाऽत्र मम प्रत्यागमनम् ।....

गृहीत्वा तत्प्रत्युत्तर महमनुपदमागत एव' इति ।....गदित्वा चैवं, अप्रतिपालयन्नेव मम प्रत्युत्तरं, प्राचलत् सः सत्वरं एकाक्येव....अभिमानोन्नत-मस्तकः।'

'अहं तु, तादृशेन तस्य भाषणेनाऽऽदौ विस्मितोऽपि, क्षणमात्रं किंकर्तव्यविमूढोऽपि, क्षणमात्रानन्तरमेव प्रकृतिमापन्नः, संस्मरन् तस्य सर्वं प्रच्छन्नाभिप्रायमिव कमटकुटिलमिव व्यवहारं, तमनुसर्तुं कृतदृढसंकल्पः, श्रोतुं तयोः संभाषणं येन केनाप्युपायेन बद्धपरिकरः, नयनयोरविषयतामुपयात एव तस्मिन्, तं प्रच्छन्नमनुगन्तुं प्राचलम् । अनुगच्छन् च तं, मार्जार इव मूषकं, तदनुपदमेव प्राप दृष्टपूर्वं भव्यं निवासमांग्लस्य तस्याधिकारिणः । तत्समीपवर्त्यारामवृक्षलताकुञ्जदुर्लक्ष्यव्यक्तिश्च उपासरम् तस्यैव ह्यस्तनस्य कक्षस्य वातायनस्य पुरुषप्रमाणस्य समीपे शुश्रूषया तयोः संभाषणस्य ।'

'प्राप च साफल्यं कल्पनातीतम् ।'

'प्राप च वास्तविकं परिचयं कुटिलकुटिलेन स्वभावेनास्माकं कन्नूरमल्लप्पस्य ।....स हि....वारं वारं साग्रहं साभिनिवेशं साभिप्रायं पृष्टस्तेनांग्लेन अधिकारिणाऽधिकृत्य वास्तविकं दिवसं समयं च भर्तुः देहावसानस्य....तथा तौ संसूचयामास यथाऽनभिनिविष्टोऽपि-का कथाऽभिनि-विष्टस्य तस्यांग्लाऽधिकारिणः-तं वास्तविकस्थितिगोपनाय चेष्टमानमेव मन्येत ।'

'स हि तौ पत्रलेखनदिवसात् प्राग्वर्तिनाविव-अनवधानतयेव-व्यानञ्ज।....द्रढीचकार च तस्यांग्लाधिकारिणः पूर्वग्रहजनितं संदेहं कपट-व्यवहारस्य प्रदर्श्याऽऽत्मानं प्रयतमानमिवाकस्मात्स्फुटितगोप्यगोपनाय.... सव्रीडमिव....व्याकुलतामिव ।'

'तदूर्ध्वं तु कीदृशं तयोः संभाषणमभूत्-तत् तु ज्ञातुं अहं न प्राभवम् ।....स्वात् काष्ठाऽऽसनात् अकस्मादुत्थितो हि स आंग्लः

अधिकारी सहसा सौहार्दाऽऽक्रान्त इव सस्मितः मधुरमधुरं किमपि जल्पन् स्वयमपि स्वासनादुत्थितं प्रणतप्रणतं लांगूलं चालयन्तं कन्नूरमल्लप्पं स्कन्धे गृहीत्वा पेयपानार्थमिवाऽन्तःकक्षेऽनयत् ।'

'प्रत्यागच्छेतां कदाचिदुभावपि तौ कुटिलहृदयौ बाह्ये कक्षे शीघ्रमेव'- इति दुराशाकदर्थ्यमानहृदयोऽहं विविधभावनाऽऽलोडितमानसस्तत्र किंचित् कालपर्यन्तं तथैव निगूहितः आसम् ।....परंतु-चिरायमाणौ तौ वीक्ष्य निराशः, 'तस्य आंग्लस्याधिकारिणोऽन्यतमः सेवकः कदाचिन्मां प्रेक्षेत। तया च सति महान् अनर्थः स्यात्'-इति आशंकया पीड्यमानः, आरामे कुतश्चिदागच्छता शुन इवाऽऽबद्धस्य मुक्त्यर्थमआकुलाकुलस्य बुक्कन-रोदनस्वरेणाधिकमेव व्याकुलितः,....ततः निःशब्दमपासरम् । निवासं प्रत्यागतश्च कन्नूरस्य प्रत्यागमनं महता औत्सुक्येनेव प्रत्यपालयम् ।'

'अपृच्छं च तं चिरात् प्रत्यागतं स्मयमानं हर्षोत्फुल्लविलोचनं प्रस्फुटदुत्साहातिशयं तदंगीकृतकार्यसंसिद्धिविषये....अज्ञ इव ।'

'संसिद्धम्!....मित्र!....संसिद्धम् अभिलषितम्!'-इति, अधिकतरस्पष्टी-करणानुत्सुकः, सहसा समुपजातस्मृतिरव, मामुवाच-'मित्र! त्वं तावन्निवर्तस्व नः कित्तूरनगरीमितः । निवेदय चांगीकृतकार्यकरणं राजमात्रे....सप्रणामम्। अहन्तु गुरुतरगृहकार्यकरणाय स्वगृहग्राममेव गच्छामीतः ।'

'अपेतिपालयंश्च मम प्रत्युत्तरं, समुत्सुक इव परित्यक्तुं मम सहप्रवासं, ततः स्वगृहाय प्रातिष्ठत ।'

'अहमपि....तं तस्य व्यवहारं दृष्ट्वा किञ्चिच्चकितः....उपायान्तराभावात् एकाक्येव ततः राजमातुश्चरणकमलदर्शनाय ।'

'विचारयन्नपि बहु न तावत् शक्नोमि निर्धारयितुं....किं जमाभिलषितं किन्नूरस्य, कथं च तत् संसिद्धं निवासे तस्यांऽऽग्लस्याधिकारिणः ।.... तस्य सूचनापत्रस्य तु तस्मै आंग्लाधिकारिणे राजमात्रा समाज्ञप्तमासीत्।

तत्तु मम समक्षमेव पूर्वेद्युः तेन अनुष्ठितमासीत् ।.... ततः परं....ततोऽधिकं....किं नाम तस्याभिलषितमासीत्?....तत् न कित्तूरराज्य-कल्याणपर्यवसायि संभवति-इति संभावयन् नूनमुद्विजे ।....अधिकमेव च....स्मृत्वा तत् तस्य स्वामिदेहावसानदिवससमयविपर्यसनम् ।'

'ज्ञास्याम एव....अचिरात्....किं तस्याभिलषितं....कथं चैतत् संसिद्धम्' इति ।-गम्भीरस्वरमाह चेन्नम्मा ।

'कथमिव?....राजमातः,-पप्रच्छ सः वृद्धः राजपुरुषः ।

'घटिकापूर्वमेवाशृण्म तेनांऽऽग्लाधिकारिणा संप्रेषितस्य दूतस्य माध्यमेन यत् तत्स्वामी श्वः स्वयमेव आगन्ता इह - इति वार्त्तां' - प्रत्युवाच राजमाता ।

'स्वयमेव आगन्ता?'....(किंचिद् विरम्य) 'स्वाच्छोकप्रदर्शनार्थम् ।'

'वर्त्तनन्तु दूतस्य न तथा व्यानक् ।....न च कर्णोपकर्णिकया विदितः समाचारः संसूचयन् यत् पर्याप्तं बलमपि तेन सहाऽत्राऽऽ-गमिष्यतीति ।....अस्तु । ज्ञास्याम एवश्व'-स्वगतमिव सा उवाच ।

विसर्ज च तं स्वगृहाय ।

एवं 'किमिव स्यात् प्रयोजनं वास्तविकं ससैन्यस्य तस्यांग्लाधिकारिणः इहाऽऽगमनस्य'-इत्यात्मनैव चिंतयन्त्या अपि, वारं वारं मनस्युद्भवन्ती-मनिष्टशंका साग्रहं दलयन्त्या अपि, क्षणमेकमपि पुत्रवियोगशोकमविस्मरन्त्या अपि, महता धैर्येण पौत्रेण उत्तरक्रिया पुत्रस्य दिवंगतस्य यथाशास्त्र कारयन्त्याश्चेन्नम्मायाः,....आशंकितपूर्वेणाऽपि अनभ्रवज्रपातसमदुःखेन वैधव्याघातेन बधिरसंवेदनायाः, नियत्या संकल्पितस्य तडित्पातस्यापरस्य अद्यापि अनभिज्ञायाः, निष्प्राणाया इव तानि तानि दैनिकानि नित्यकार्याणि मूकेन परिवार जनेनानुष्ठीयमानानि अवलोकयन्त्याः, 'सततरुदितोच्छ्न-

नयनायाः' वीरात्वायाः,....बाल्त्वाद्वयसः परिस्थितेः सांमुखीनाया गांभीर्यमाकलयितुमसमर्थस्य गुरुजनादेशपालन एव इतिकर्तव्यतामात्मनो मन्यमानस्य बालराजस्य सवाईमल्लसूर्यस्य च स दिवसः....लोहपादइव शनैः शनैर्व्यरंसीत् ।

रुद्राक्षाच्च चेन्नम्मा....उत्तरेद्युः....प्रहरमात्रजीर्णे दिवसे....परिकल्प्य स्वान्तमासन्नप्रायं नितान्त खिन्नायाः कित्तूरराज्यश्रियः दुःखनिःश्वास इव मन्दं मन्दं वहति मातरिश्वानि, साक्षात्कृत्य प्रारभमवसानस्य कित्तूरराजैश्वर्यस्य निर्वेदमुपयात इव मंदप्रभे प्रभाकरे,....धवलमलिनवसना, सवाईमल्ल-सूर्यसनायांका, कलिमथस्वामि-गुरुसिद्दप्पा-नरसिंहरावादि-विश्वसनीयराजपुरुष-सहिता, कुशासनोपविष्टा, यवनिकान्तर्हिता, तस्मिन्नेव निरास्तरणे शून्येशून्ये एकमात्रकाष्ठासनसनाथे विशाले रुग्णकक्षे, तं, विगतनिशीथे एव कित्तूरनगरीसमीपे आगतं, व्यंक्तुमिव वैरभावं गूढं बहिरेव नगर्याः कृष्टकटकं, आंग्लमधिकारिणं, धृतस्वविशिष्टाधिकारसंसूचकमहार्हवेषं, रक्तवर्णं, श्मश्रुलमुखं, किंचिन्नीलनयनं, उन्नतमस्तकं, सह सशस्त्राभ्यां अंगरक्षकाभ्यां गर्वोद्धतया गत्वा प्रविशन्तं, प्रविश्य समुपेक्ष्येतरान् तामेव किंचिद्दृश्यां तोलयन्त्या इव तन्मनोबलं स्थिरया दृष्ट्या दुर्विज्ञेयभावयाऽवलोकयन्तं, अवलोक्य सहसा रक्ततरीभवन्तं, समुपविशन्तं च काष्ठासने निःशब्दम्।

अन्वभूच्च तस्मिन्नेव क्षणे तीव्रां तिरस्कारभावनाम् ।

प्रयतमाना च कथंचिद्विजेतु तामाह, यवनिकान्तर्हितैव, कतिपयक्षणानन्तरं-'उपकृतं बहु भवता स्वयमनाऽऽगत्य विपद्यस्यां समशोकतां प्रकटयता ।'

स तु निशम्य तां मञ्जुलामपि दृढां सुसंस्कृतामपि स्वाधिकारभावना-परिपूर्णां सशोकामप्यदीनां सौम्यामप्यनुपेक्षणीयां वाणीं आयान्तीं यवनिकाभ्यन्तरतः, क्षणमात्रं, विस्मितः क्षणमात्रमप्रतिभः, क्षणमात्रं मूकः,

सहसा संस्मृतश्चकर्तव्य इव, दर्शयन्निव स्वहस्तधृतं किमपि पत्रमिवोवाचा-संस्कृतामस्पष्टामधिकारमदपूर्णां जडाक्षरां स्त्रैणामिव वाचं-'वयं.... अत्र....आगताः....सूचयितुं....यदस्माकं प्रभुता....एतत् दत्तकपुत्रग्रहणं नैव अनुमोदते-इति ।'

क्षणमात्रं विरराज तस्मिन् बृहति कक्षे घना नीरवता ।

'यतो हि....एतत् दत्तकपुत्रग्रहणं स्वयं कित्तूरराजेन नैव कृतम् ।'

तथैव विरराज तस्मिन् बृहति कक्षे घना नीरवता ।

'कृतस्वाप्यस्य कृते पूर्वानुमोदनमांग्लप्रभुसत्तायाः कित्तूरराजेन नैवाधि-गतम् ।'

तथैव विरराज तस्मिन् बृहति कक्षे घना निरवता ।

यावच्चाऽऽक्रान्त इव तद्भयेन सः अधिकारी, किंकर्तव्यमूढः, स्वौ अंगरक्षकौ स्वपार्श्वयोः मूर्तिवत्तिष्ठन्तौ, चकितचकितमवलोकयति तावत् शुश्राव तामेव पूर्ववन्मञ्जुलामपि आवेशतीक्ष्णां शान्तामपि स्फुटपरिलक्ष्यमाण-क्रोधोद्रेकां वाणीं -

'नरसिंहराव!....प्रष्टव्योऽयं - किं प्रमाणमाश्रित्यास्य आंग्लप्रभुसत्ता दत्तक-पुत्रग्रहणं स्वयं कित्तूरराजेन न कृतमिति मन्यते ।'

'सूचनापत्रे निर्दिष्टायास्तियेः प्रागेव हि सः मृत आसीत्'-झटिति प्रत्युवाच स आंग्लः अधिकारी....सकुत्सस्मितं....आदितः विचारितपरि-कल्पितामोघप्रत्युत्तर इव ।

'नरसिंहराव!....प्रष्टव्योऽयं-किं प्रमाणमत्र इति ।' पुनः स शुश्राव तामेव आवेशतीक्ष्णां वाणीम् ।

'भवत्या स्वयं प्रेषितस्य पत्रवाहकस्यानवहितस्य मुखात् सहसा

विनिर्गतं सत्यं वचनम् !....अस्मत्प्रेषितस्य वैद्यस्य निवेदनं च'-तत्क्षणमेव प्रत्युवाच सः सुविचारितपृच्छ इव ।

'नरसिंहराव!....प्रष्टव्योऽयं-यदि नाम कित्तूरनृपः सूचनापत्रे विनिर्दिष्टाया-स्थितेः प्रागेव दिवं गतस्तर्हि कथमिव तदन्ते तत्कृता स्वाक्षरी उपपद्यते-इति ।' - पुनः सः शुश्राव तामेव उपहासगर्भामिव वाणीम् ।

'सा तु....तेन न कृता....। मृतहस्ते....निधाय लेखनीं....युष्माभिः तेन सा कारिता'-कुटिलं हसन् अवदत् स आंग्लोऽधिकारी चतुरमन्यः।

कतिपयक्षणपर्यन्तं पुनः विरराज तस्मिन् बृहति कक्षे संक्रुद्धा नीरवता ।

अभज्यत च सा सहसा यवनिकाऽभ्यन्तरतः समापतन्त्या प्रशान्तयाऽपि वज्रकठोरया निरुद्वेगया दयमानयेव तयैव वाण्या -

'नरसिंहराव!....सूचनीयोऽयं यत्-कित्तूरराजस्य देहावसानं कस्यां तिथौ वेलायाञ्च अभूत् - इत्यत्र सन्ति साक्षिणः असंख्या अत्र राजपुरुषाः सामान्याश्च प्रजाजनाः विश्वसनीयतराः कन्नूरमल्लप्पापेक्षया.... साक्षात्कर्तार-श्चांऽऽग्लवैद्यापेक्षया ।....प्रष्टव्यास्ते अनेन....।'

'यत्तु उक्तमनेन सूचनापत्रे कित्तूरराजस्य स्वाक्षरी तद्हस्तेन अस्माभिः, तत्प्राणोत्क्रमणानन्तरं, कारिता-इति....तत् इयत् नीचतापूर्णं यत्तत् प्रत्युत्तरमेव नार्हति ।'

'सत्यप्येवम् अनुकम्पनीयोऽयं सूचनीयश्च-यदेतादृशं घृणितं कृत्यं तस्य देशे एव स्यान्नाम संभवनीयम् ।....नेह ।....वयं हि भारतीया.... आर्याः....त्यक्त्वा पार्थिवं शरीरं परलोकं गतस्य जीवात्मनः शरीरं, बहु मानयन्तस्तदिच्छां, धर्मशास्त्रोक्तेन विधिना अन्त्यसंस्कारेण संस्कुर्मः,.... अग्नौ च जुहुमः,....न तेन तदनामिष्टं कार्यं क्षुद्रं सांसारिकं कास्यामः....

स्वार्थान्धाः ।'

'अपि च - सूचनीयोऽयं'- अग्रे उवाच सा दृढतरा वाणी, 'नासीत् अणीयस्यापि आवश्यकता एतादृशस्य घृणितकार्यकरणस्य।....यदि हि कित्तूरराजः अकृतदत्तकपुत्रपरिग्रह एव देहं ऐहलौकिकमन्यक्ष्यत् तर्हि तस्य पत्नी....इयं....मत्समीप एव समुपविष्टा....पुत्रमिमं दत्तकविधिना स्वयमग्रहिष्यत् ।'

'तस्यां परिस्थितौ....अस्माकमांग्लप्रभुसत्ताऽपि तद्दत्तकपुत्रग्रहणं नान्वमोदिष्यत'-समुपजाताश्वास इव सहसा प्राह गर्वोद्धतः सः आंग्लः अधिकारी ।

कतिपयक्षणपर्यन्तं पुनः विरराज तस्मिन् बृहति कक्षे क्रोधभंगुरानीरवता ।

'नरसिंहराव!....सूचनीयोऽयं यत् नासीत्....नास्ति....न स्याच्च कदाप्यावश्यकता 'आंग्लाप्रभुसत्ताया' अनुमोदनस्य ।....कित्तूरराजेन यदस्य समीपे प्रेषितं तत्पत्रं सूचनापत्रं....न तदनुमोदनप्रार्थनापत्रम् ।....एतादृशानि सूचनापत्राणि तेनान्येषामपि राज्यप्रमुखानां संनिधौ तदा संप्रेषितानि ।.... न चैतावता तानि सर्वाणि तथा संपद्यन्ते ।....स्वतंत्र आसीत्.... अस्ति.... स्याच्च कित्तूरराज्यप्रमुखः स्वोत्तराधिकारिचयने ।....सर्वथा स्वतंत्रः ।

'तत्....किं त्वं....' प्रारभत सहसा समुत्तेजितः स आंग्लः अधिकारी.... प्राप्येव चिरप्रतीक्षितमवसरं योग्यम् ।

'नरसिंहराव!....सूचनीयोऽयं यद्यस्ति अस्य इतःपरं संभाषणेच्छा तर्हि अनेन शिष्टाचारसंमता भाषैव प्रयोक्तव्या'-सहसा प्राह सा तीक्ष्णा वाणी यवनिकाभ्यन्तरतः ।

'हम्!....तत् किं भक्तां'-शुन्धित्वा स्वां शब्दरचनां प्रारभत स अकस्मान्नियंत्रित इव....अकस्मात् कशाताडित इव....अकस्मात् दत्तचपेट

इव रक्ततरवर्णः, 'आंग्लप्रभुसत्तां न स्वीकरोति?'

'आंग्लप्रभुसत्तां स्वीकरोतु....न वा स्वीकरोतु कित्तूरनृपः ।....सर्वथाऽसंबद्ध एव प्रकृतेन भवतः प्रश्नः ।....कित्तूरनृपस्य स्तोत्तराधिकारिचयने निराबाधं स्वातंत्र्यमुभयोरपि विकल्पयोस्तदवस्थमेव ।'

'आंग्लप्रभुसत्तया सह कित्तूरनृपेण कृतः संधिस्तु'- प्रारम्भ सहसा प्रत्युत्पन्नमतिरिव आंग्लः सः अधिकारी ।

'आंग्लप्रभुसत्तया सह कित्तूरनृपेण कृतः सः संधिस्तु'-दृढस्वरं प्रत्युवाच सा वाणी, 'पुण्यपत्तनेश्वरेण सह पूर्वं कृतं संधिमेवानुकरोति सर्वथा....ऋते खानपुरविभागसमर्पणादधिकात् ।'

'न च तेन कृतौ संधौ वाक्यमेकमपि आसीद्यत् व्यानक्परंपरयाऽपि दत्तकपुत्रग्रहणाय तदनुमतेरावश्यकताम् ।....अतएव तु दिवंगते परमपूज्ये मम श्वशुरे मीरजस्थिते परशुरामभाऊकारागृहे....तस्य भार्या....आदरणीया मम श्वश्रूः मम भर्तारं दत्तकविधिनाऽगृह्णात्....अनधिगत्यैव पुण्यपत्तनेश्वरस्यानुमतिम् ।'

'अपि च-दुर्दैववशात् पुत्रहीनस्य पुत्रकामस्य दत्तकविधिना पुत्रपरिग्रहः भारतीयस्याऽऽर्यस्य-सधनस्य वा निर्धनस्य वा, शासकस्य वा शासितस्य वा, विदुषो वा मूर्खस्य वा-धार्मिकः सामाजिकश्चाधिकारः ।'

'अधिकारोपभोगार्थं च नास्ति कस्याप्यनुमतेरावश्यकता ।'

'न स्यान्नाप ।....परंतु....स्वक्षरी एव कित्तूरराजस्य कृत्रिमा'- बलादाह स आंग्लः अधिकारी....पुनरपि उपाददानस्त्यक्तकल्पं विवादकारणं प्राथमिकं....हतबुद्धिः ।

'प्रत्युत्तरितोऽयमाक्षेपः' शान्तस्वरमवदत् सा वाणी । 'न प्रत्सुत्तरितः' उच्चैःस्वरमाह सः अधिकारी, 'कित्तूरराजः इमं....इमं बालकं....पुत्ररूपेण

ग्रहीतुं कदापि नैच्छत् ।....यदि हि सः तथा ऐषिष्यत् तर्हि सः स्वस्य इच्छां तादृशीं अस्मन्मेलनावसरे....मासचतुष्कपूर्वमेव संपन्नेऽदर्शयिष्यत् ।'

'अपि च'-सोत्साहमवदत् सः अधिकारी, सहसा स्मृत्वेव (तन्मतेन) प्रबलतमं तर्कं, 'पत्रमेतत् अन्यवर्णया मस्या लिखितं....स्वाक्षरी च अन्यवर्णया मस्या कृता ।....स्फुटमेतद्व्यनक्ति यत् सा कृत्रिमा ।'

'तत् पत्रं....अन्यानि पत्राणीव तत्सदृशानि....कित्तूरराजेन लेखितम् ।....स्वाक्षरी तु तेन स्वयं....' आरभत सा वाणी, असत्यारोपेण मनागपि अविचलिता ।

'असत्यमेतत् !....असत्यमेतत् !....कृत्रिमैव सा स्वाक्षरी....' खण्डयन् मध्य एव तद्वाक्यं सावेशमाह स मूढः....साक्षात्कुर्वन्निव प्रबलतमं स्वमन्तिमं तर्कमपि काट्यमानं....आतुर इव समापयितुं तं सर्वजनसाक्षिकं संभाषणप्रसंगं कथमपि, 'रिक्तं कोपेन पूरयेत्' इति न्यायमनुसरन् ।

'अहो नैघृण्यं भवत्याः....भवत्याः राजपुरुषाणां....यन्मृतः अस्माकं प्रियसुहृत्....भवद्भिः सर्वैः एवं खलीकृतः....एवं विडंबितः....एवमपमानितः।'

'नरसिंहराव!....कथयतु भवान् अमुं....यदि हि अभयत्र....अस्माकमभ्यागतरूपेण आगतः नाभविष्यत्....तर्हि अयं....अस्मिन्नेव क्षणे फलमुचितं अस्यानर्गलस्य प्रलापस्यालप्स्यिष्यत अस्मात् खण्ड्गात् ।'

'एतावत् धाष्ट्र्यं तव....जरत्याः ।'....चुक्रोश स आंग्लः अधिकारी, सहसा स्वासनादुत्थितः फेनिलमुखः क्रोधातिरेकवेपमानशरीरः आरक्तलोचनः, 'एतावत् धाष्ट्र्यं....सर्वसमर्थायाः आंग्लप्रभुसत्तायाः प्रतिनिधिं मामेवमभिभवन्त्याः ।....लप्स्यसे....त्वं....इमे त्वद्वालदर्शिनश्च मूढाः....फलमुचितमेतावतो धाष्ट्र्यस्य ।....लप्स्यसे....अचिरादेव....अचिरादेव ।'

क्रोशंश्चैवं निर्जगाम कक्षात् तस्मात् प्रभञ्जन इव ।

## (सप्तमः परिच्छेदः)

'-इत्थं मन्यन्ते एते श्वेता यदस्माभिः स्वार्थसिसाधयिषाविलोपितविवेकैः, लालसावशात् कण्ठोपमर्दं निष्पीड्य हिंसद्भिः ऐहलौकिकीं लज्जां परलौकिकीं भीतिं च....सद्य एव गते परलोके स्वे पुत्रे....तस्य निर्जीवेन हस्तेन लेखनीं धारयद्भिः कृतकपत्रस्यान्ते स्वाक्षरीं तया कारयदभिस्तेन एतादृशो बालकः पुत्रत्वेन ग्राहितः यं' सः जीवितः सन् कदाऽपि न चकांक्ष।'

आह संयततीक्ष्णस्वरं मलिनवसना चेन्नम्मा....आंग्लाधिकारिप्रयाणा-दनन्तरमविलंबमेव प्रजविद्रुतमुखेनाऽऽहूतान्, अनुमाय कार्यगौरवं परित्यज्य वैयक्तिकानि स्वस्वकार्याणि सत्वरमुपस्थितान् अनावृतमुण्डितमस्तकान् मलिनसाधारणवेषान् राजशोकखिन्नमुखमुद्रान् आदौ सकौतूहलान् पश्चाभि-शम्यांग्लाधिकारिणस्तादृशं निर्घृणं दूषणं कर्णौ स्वौ अविश्वसतः पश्चात् क्रोध-ताम्रमुखान् निःशब्दानपि प्रस्फुटद्भुजदण्डस्फुटानुमेयक्रोधावेशान् उच्चावचान् राजपुरुषान् नगरश्रेष्ठिनः सभ्यांश्च नागरिकप्रमुखान् विस्फारितनयनं शृण्वतस्तद्भाषणं समुपविश्यानास्तृतायां भूमौ विशालस्य सभाकक्षस्य ।

'इत्थं मन्यन्ते एते श्वेता यन्निर्जीवशरीरभुजो वयं पिशाचाः....।'

'स्वयं पिशाचा....अस्मान् मन्यन्ते तथा'-गंभीरस्वरं जगाद कलिमथ-स्वामी....सभामंचैकदेशे विस्तृते मृगासने समुपविष्टः ।

'दूषणमेतद्दभिः निर्घृणं....अपमानिता वयम् ।....न वयमेव । अपि तु - युष्माकमयं बालराजोऽपि । न केवलो बालराजः । अपि तु-गुरुसिद्दप्पानरसिंहरावप्रभृतयः उच्चावचा राजपुरुषा अपि । न केवला एते राजपुरुषाः । अपि तु यूयं....नगरश्रेष्ठिनोऽपि....यूयं....नागरिकप्रमुखा अपि, यूयं....सर्वे अपि । सर्वेषां युष्माकं मातुरयमपमानो हि युष्माकमेव सर्वेषां अपमानः ।'

'अपि यूयं एतादृशं घोरमपमानं अश्रुतपूर्वसदृशं सहिष्यध्वे?'-

प्रखरस्वरमपृच्छत् क्रोधावेशोग्रा राजमाता....विग्रहधरा नु कित्तूरराज्यस्या-स्मिता ।

'नैव....नैव'-सहसा जुगुञ्ज सभाकक्षः सभ्यानां प्रत्युत्तरस्य निनादेन कण्ठसहस्रविनिर्गतेन....सभाकक्षस्य भित्तीरिव विदारयता....काचदीप-भाण्डानीवांदोलयता....गगनवितानमिवं संस्पृशता ।'

'नैव....नैव....' क्षणमात्रानन्तरं जुगुञ्ज प्रासादप्रांगणं विस्तृतं....तत्र एकत्रभूतस्य मलिनपरिधानस्य निराहारस्य नागरिकसहस्रस्य चिनलिखितस्ये-वोररीकृत्यमौनं चेन्नम्मायाः संबोधनं तत् शृण्वतः, भृत्वा तस्यास्तं प्रश्नं सहसोत्तेजितस्य, प्रत्युत्तरस्य निनादेन तीक्ष्णेन ।

'दलित्वा पराभूतमिममस्माकं भारतवर्षं....इमे श्वेता मन्यन्ते....येन केनापि....नीचतमेनापि....दूषणेन यं कमपि भारतीयं दूषयितुं, यस्य कस्यापि भारतीयस्य भावनाः....आन्तरतमा अपि....प्रियतमा अपि....पूज्यतमा अपि....अवमानयितुं तेऽधुना समर्थाः । विजित्य पुण्यपत्तनेश्वरं पराजित्य दिशीश्वरं वशीकृत्य शीखनरेशं समस्ते भारतवर्षेऽकुतोभयाः, पराभूय प्रतिद्वंद्विनः फ्रेंचान् श्वेतमहाद्वीप एव महता चातुर्येण शौर्येण च समस्त जगतीतले निर्द्वन्द्वभावमुपेता इमे आंग्ला....अधुना भारतमातुः शोषणार्थं बद्धपरिकरा अस्मादृशानामाकारेण क्षुद्राणामपि स्वाभिमानिनां कण्टकानामिवारुन्तुदानां स्फुलिङ्गानामिवोपेक्षितानां सतां विनाशकारणानां पारदास्यान्धतमसे नक्षत्रायमाणानां राज्यानां स्वसाम्राज्ये विलयनाय बद्धपरिकरा इव लक्ष्यन्ते ।....बिभ्यति हि इमे यत् कदाचित् अस्मादृशानां क्षुद्राणां राज्यानामन्यतमादुद्भूतः देशभक्तिस्फुलिङ्गः....सहसा प्रज्वलयन् असंस्थभारतीयहृदयानि....पश्यतामेव तेषां व्यात्तमुखानां....किंकर्तव्य-विमूढानां....साम्राज्यमेतद्विशालं....अस्मान् भारतीयान् वञ्चयित्वा निर्मितं....अस्माकं भारतीयानां सहकार्यस्योपरि सर्वथा निर्भरं....क्षणे एकस्मिन्नेव भस्मसात् करिष्यत....अग्निकण इव तृणनिर्मितं प्रासादम् ।'

'अत: इमे प्रयतत्ते विनाशयितुं राज्यान्यस्मादृशानि-'आवृणोतृ अस्माकं भारतीयानां हृदयाकाशं धन: निरुच्छ्वास: निराशान्धकारो युगान्तस्थायी.... निमज्जयन् अस्मान् निबिडे तमोगुणे....कुर्वन् अस्मान् सर्वान् भारतीयान् पशुनिर्विशेषान्-इत्याशयेन गूढेन ।'

'अपि यूयं....एतेषामिममाशयं....पूरयिष्याथ?'

'नैव....नैव....'-सहसा जुगुञ्ज सभाक्क्ष: प्रत्युत्तरनिनादेन कण्ठसहस्त्र-विनिर्गतेयाऽऽलोडयताऽन्तरिक्षम् ।'

'प्रदर्शयत तर्ह्यात्मन: स्वाभाविकभोज: ।....प्रदर्शयत यदेकोऽपि अंगार:....क्षुद्रोऽप्यंगार:....स्पृष्ट: पादेन दहत्येव निर्विवादम् ।'

'अनागतं खलु केन दृष्टं?....अतर्क्यगति: खलु नियति: ।.... निमित्तीकृत्यैतत् अभिभवनं....सा....कदाचिद्विद्रोहदावनलं समस्ते भारतवर्षे प्रज्वलयन्ती, दावानले च तस्मिन् श्वेतपारदास्यं भस्मसात्कुर्वती क्षुद्रं राज्यमस्माकं इतिहासेषु अजरामरतां निनीषति ।'

'भवतु नामानागतम् अनुकूलं प्रतिकूलं वा ।....न खलु वयं समुत्सुका: ज्ञातुं तत् ।....समुत्सुका वयं स्वाधिकाररक्षार्थम् ।....समुत्सुका वयं स्वसम्मानरक्षार्थम् ।....समुत्सुका वयं स्वधर्मरक्षार्थम् ।'

'उत्तिष्ठाम तर्हि....उद्यतायुधा: स्वातंत्र्यरक्षार्थं....घोषयन्त: 'हर हर महादेव!'

'हर हर महादेव !....हर हर महादेव !'-अजुघूषत् सहसा स विशाल: सभाकक्ष:....प्रत्युत्तरयत् राजमातुस्तदावाहनं समराये ।

'हर हर महादेव! हर हर महादेव!'-अन्वजुघूषत् सहसा अपार: नागरिकसंमर्द: एकमभूत: कित्तूरराजप्रासादप्रांगणे ।

'हर हर महादेव! हर हर महादेव!'-अन्वजुघूषन् उत्तुंगा अजय्या:

प्रकाराः कित्तूरदुर्गस्य बलाढ्यस्य ।

'हर हर महादेव! हर हर महादेव!'-अन्वजुघूषत् सहसा अपारः प्रजाजनसंमर्दः एकमभूतः राजपथे ।

'हर हर महादेव! हर हर महादेव!'-अन्वजुघूषतां नातिदूरावस्थितौ कदाहिमर्दि-केंपमद्योख्यौ शिखरिणौ ।

'हर हर महादेव! हर हर महादेव!'-अन्वजुघूषत् अस्मिता भारतभुवः जागरिता पारदास्यतंद्रायाः ।

साक्षात्कृत्य प्रतिक्रियामधिकारिणां सैनिकानां प्रजाजनानां समाश्वस्ता स्वदेशाभिमानप्रोज्ज्वलमुखारविन्दा च चेन्नम्मा यावदुपविशति कुशासने स्वे तावत् कित्तूरदुर्गपालः समुत्तेजित इव सत्वरं प्राविशत् सभाकक्षं, उपासरत् तां ससंभ्रमं, न्यवेदयच्च मंद्रस्वरं - 'मातः!....सद्य एव निवेदिता अस्माकं निरीक्षकैः सैनिकैः द्वादश सशस्त्राः श्वेताः सैनिकाः.... प्रविश्य दुर्गमपावृतेन प्राच्येन महाद्वारेण सह पापिना तेनांग्लेनाधिकारिणा.... संचल्य कोषागारस्थानं समुद्दिश्य....कृत्वा तदुपरुद्धसर्वद्वारं....निषेधन्तः अस्माकमेव सर्वेषां संचारं तत्र ।'

'कथं खलु ते प्राभवन् प्रवेष्टुं....सह तेनाधिकारिणा....तेन प्राच्येन महाद्वारेण?'-अपृच्छत् सा ।....किमिति न तेऽवरुद्धास्तत्रैवास्माकं द्वाररक्षकैस्तत्रत्यैः?'

'ते खलु'-अधोमुखं प्रत्यवदत् दुर्गपालः, 'श्रोतुमत्रभवत्या उद्बोधनं.... प्रासादप्रांगणेऽन्यैः सहाऽऽगता आसन् ।'

'कृत्वा तन्महाद्वारम् अरक्षितमेकेनापि रक्षकेण?'-अपृच्छत् सा सक्रोधम् ।

विनतमस्तकः न किमपि प्रत्यवदत् दुर्गपालः ।

'अधिक्षिपतु भवान् तान् स्वनियतकर्तव्यपालनशिथिलान्, आदिशतु कर्तुमुभे अपि प्राच्यपाश्चात्त्ये दुर्गमहाद्वार निरुद्धप्रसरे, बन्दीकरोतु च तान् आंग्लसैनिकान्....सह तेनातिधृष्टेन तदधिकारिणा'-समादिदेश सा क्षणमात्रं विचार्य ।

'मृष्यतु राजमाता'-प्रत्युवाच मंद्रस्वरं दुर्गपालः, 'तेषां सः अधिकारी तु समादिश्य स्वसैनिकान् रक्षितुं (!) राज्यकोषागारं....कटकं स्वं तस्मिन्नेव समये प्रतिनिवृत्तः ।'

'करोतु तर्हि भवान् उभेऽपि द्वारे सशस्त्रसैनिकनिरुद्धप्रसरेऽस्मिन्नेव क्षण'-तत्क्षणमवदत् राजमाता ।....'कदाचित् स कपटी श्वेतः अधिकारी, अदत्वाऽस्मभ्यं स्वल्पमप्यप्रकाशं सैनिकसामर्थ्यसंनहनाय, सर्वानेव सैनिकान् स्वान् दुर्गान्तः प्रवेश येदवलोक्यास्मान् भव्यसंकल्पनरताननवहितान् ।

समादिश्य चैवं राजसभाकक्षान्निवृत्ता सा समरप्रसंगाय नातिविप्रकृष्टाय संनद्धं स्वं बलं कर्तुं....मित्रराज्यानां प्रमुखानां साहाय्यं याचितुं च.... कृतसंकल्पा,....गुरुसिद्दप्पादिभिः प्रमुखैः राजपुरुषैः सह मंत्रणां कर्तुं प्रारभताविलंबमेव ।

बहिः कित्तूरनगर्याः क्लृप्तं स्वं कटकं प्रतिनिवृत्तः सः आंग्लः अधिकारी तु शुश्राव यदा वार्त्तां....'बन्दीकृताः आंग्लाः सैनिका दुर्गभ्यन्तरे तदादेशमनुतिष्ठन्तः,....निषिद्धश्च दुर्गान्तः प्रवेशः कित्तूरदुर्गपालेन राजामाता समादिष्टेन'....इति सूचयन्तीं,....तदा क्रोधताम्रः प्रतन्यवर्तत तत्क्षणमेव स्वं मुख्यालयं धारवाडस्थितम् । अलिखत् पत्रमेकं कठोरं राजमातरं समुद्दिश्य । असुसूयच्च तां यत् - 'यतो हि कित्तूरराजः अपुत्रक एव मृतः अस्ति, यतो हि दत्तकपुत्रग्रहणमवैधमननुमतं चास्ति, यतो हि च कित्तूरराज्यस्य कोऽप्युत्तराधिकारी नास्ति....ततः सर्वप्रभुत्वसम्पन्ना आंग्लप्रभुसत्तैव तस्योत्तराधिकारिणी अस्ति । अतस्तस्याः अधिकृतप्रति-

निधित्वेन तेन एक: उच्चाधिकारसंपन्न: आंग्ल: अधिकारी कोषागार-व्यवस्थासंचालनाय संप्रेष्यते । अधिक्रियते च स: तद्व्यवस्थासंचालनार्थम् अग्रिमाऽऽदेशपर्यन्तम् । सह तेन तस्या: तद्वशंवदानां वा स्वल्पोऽप्य-सहयोगस्तस्या: तेषां वा सद्य: अनिष्टकरोभविता' इति ।

सह च तेन पत्रेण प्राहिणोत् एकमांग्लमधिकारिणम् ।

स तु तदहरेव तत: प्रस्थित: यदाऽपरेद्यु:, मध्याह्नसमये, समुपससर्प कित्तूर दुर्गप्रकारस्य प्राच्यं द्वारं सशस्त्रसैनिकपरिरक्ष्यमाणं, जुघोष गर्वोद्धतया वाचाऽऽत्मानं आंग्लप्रभुसत्ताप्रतिनिधिम्, इयेष च द्रष्टुं राजमातरं तस्मिन्नेव क्षणे सहैकेनात्यधिकमहत्त्वपूर्णेन पत्रेण तदा तमत्या: सशक्ता: द्वाररक्षका: रुरुधुस्तं तत्रैव, जगृहु: हस्तात्तस्य तत्पत्रं, नीत्वा च तदन्त: मंत्रणाकक्षे परामर्शव्यापृतायै राजमात्रे दर्शयामासु: ।

राजमाता तु पठित्वा शकलीकृत्य च तत् शतश: शान्तेन मनसा ददौ तत्तेभ्य:,....आदिदेश च तान् दातुं तत् तस्मै आंग्लप्रभुसत्ताप्रतिनिधये तत्प्रत्युत्तरमिति ।

अधिगत्य इमं घोरमपमानमतिसंक्रुद्ध: धारवाडस्थित: स: आंग्ल: अधिकारी इयेष विलाययितुं कित्तूरराज्यमांग्लसाम्राज्ये तीव्रतरेणैव संवेगेन।

लिलेख च पत्रमेकं तत्क्षणमेवोद्दिश्य स्वं वरिष्ठं अधिकारिणं चैपलिनाख्यं दक्षिणभारताऽऽयुक्तं पुण्यपत्तनस्थं - वर्णयन् सविस्तरं सातिशयोक्ति च....कथं खलु स: प्राप पत्रमेकं कित्तूरराजात् शिवलिङ्गरुद्र-सूर्यात् संसूचयत् आसन्नमरणस्य तस्य दत्तकपुत्रग्रहणं,....कथं खलु स: संदिदेह तस्य पत्रस्य प्रामाणिकत्वेऽवलोक्य तल्लेखनतिथेस्तत्स्वाक्षरीतिथेश्च पार्थक्यं,....कथं खलु स: तदहरेव प्रेषयामास मुख्यालयस्थितं आंग्लं भिषग्वर्यं परीक्षितुं रुग्णं कित्तूरराजं,....कथं खलु स: प्रस्थितोऽविलंबमेव ददर्श तं समुत्क्रान्त प्राणं,.... कथं खलु स: इच्छन्नपि न पारायमास

परीक्षितुं तस्य मृतं शरीरं,....कथं खलु अधिकगत्य तस्य वृत्तान्तं दृढतरीभूतसंशयः सः पप्रच्छ तत्पत्रवाहकान् विश्वसनीयान् कित्तूरराजपुरुषान् तत्स्वामिमरणतिथिमधिकृत्य,....कथं खलु ते सरलस्वभावाः प्रकटयामासुः आदौ सत्यां तिथिं पूर्वेद्युस्तनीं पश्चाच्चासत्यामुत्तरेद्युस्तनीं,....कथं खलु स इत्थं निश्चिकाय पत्रस्वाक्षरीं कित्तूरराजस्यासत्यां,....कथं खलु स जगाम, अनादिष्टोऽपि उच्चतरेणाधिकारिणा विदूरस्थितेना त एव नवीनतम-स्थानिकपरिस्थित्यनभिज्ञेन, कित्तूरनगरीमेकाकी निःशस्त्रः रक्षतुं शान्तिं व्यवस्थां च तस्मिन् क्षुद्रे राज्ये रक्षितुं चाधिकारान् बलाढ्यस्यांग्लसाम्राज्यस्य नीतिसंमतान्,....कथं खलु सः अवमन्यत कित्तूरराजमात्राऽहंभावोद्धतया सर्वजनसमक्षं,....कथं खलु समुपेक्ष्य तद्वमाननं दुःसहं सः स्वकर्तव्यपालन-मात्रबुध्या पुनः प्रविवेश दुर्गं सह कतिपयैरेवांग्लसैनिकैरादिदेश च तान् रक्षितुं राज्यकोषागारं विश्वासघातिभ्यः लुण्ठकेभ्यः कित्तूरराजपरिवार-जनेभ्यः,....कथं खलु उद्धता स्व कपटकुशला राजमाता, विज्ञाय कोषागारसंरक्षणोपायान् तेन तथाऽविलंबं प्रयुक्तान् विफलमनोरथा, क्रुद्धा, आगत एव तस्मिन् बहिर्दुर्गात्, तान् आंग्लसैनिकान् अकस्मात् बन्दीचकार, रुरोध दुर्गान्तःप्रवेशं विना तस्या अनुमतिं कस्यापि,....कथं खलु सः अधिगत्यापि समाचारं राजमातुस्तस्या अनधिकारचेष्टाया ईषदप्यविचलितः लिलेख तामुद्दिश्यपत्रमेकं सविस्तरं वस्तुस्थितिप्रकाशकं तदाश्वासजनकं, प्रेषयामास तन्माध्यमेनैकस्यांग्लस्योच्चाधिकारिणस्तस्याः समीपे,....कथं च खलु तद्प्यपामन्यत तया दुर्हैवविनष्टमतया दर्पोद्धतया ।

अन्ते च पत्रस्य सावेशं वर्णयामासाकारणवेषदूषितयाऽतिशयोक्ति-पूर्णयाशैल्या राजमातुः स्वभावं स्वार्थान्धमिति प्रभावं च कित्तूरराज्ये सर्वंकषमिति, व्यानञ्ज च स्वं दृढं मतं स्वानुभवाधारितं यद्यवो हि राजमाता आंग्लविदेषदन्दह्यमानहृदया साधनीकृत्यमिथ्यादत्तकपुत्रं मृतस्य कित्तूरराजस्य ववाञ्छ ग्रहीतुं राज्यस्य वास्तविकानि प्रशासनसूत्राणि

स्वहस्तयोः प्रयोक्तुं च तानि आंग्लप्रभुताभिभूतानां भारतीयनृपाणा-मन्तर्गूढविद्वेषाणां सामर्थ्य वर्द्धनाय शनैः शनैः....अतः सम्पूर्णं विलयन-मेव,....अविलंबं विलयनमेव प्रयुज्याग्लबलं....निःसंदेहं विलयनमेव कित्तूरराज्यस्यांग्लसाम्राज्ये श्रेयस्करमिति ।

प्रेष्य च तत् पुण्यपत्तनं प्रजविविशेषदूतमाध्यमेन आरभत सः शृगालधूर्तः थॅकरे प्रयोक्तुं तांस्तान् कूटोपायान् समुत्पादयितुं पारस्परिकं वैमनस्यं कित्तूरराज परिवारजनानं मनुःसु....विशेषतो मनसि एकादशवर्षीयायाः राजपत्न्या वीराव्वायाः । प्रायतत च भृशं दूषयितुं तत्,-अर्थात् क्रीतानां कर्णेजपानां तद्दासीनां माध्यमेन,-कथयित्वा तां वारं वारं यत् 'तस्याः श्वश्रूः कृत्वा तत्सर्वं नाटकंस्थापयित्वा कित्तूरराजसिंहासने स्ववशंवदमबोध बालकं स्वयं शासितुमिच्छति राज्यं पूर्ववत्....निरंकुशा,....तस्याश्च शासनकालेऽवस्था तस्याः निःसंशयमतीव दयनीया भाविनी, अतस्तया स्वहितरिरक्षिषया आंग्लानां तन्मित्राणामेव साहाय्यं करणीयम्' इति ।

परंतु - दुष्टा उपायास्तस्य ते वैकल्य एव निरपवादे पर्यणमन्त। बालाऽपि कुलीना सा राजपत्नी हि न केवलं न मनश्चक्रे किंचिदपि कर्णविषेषु तेषु अकर्णश्रवेषु....अपि तु स्वसेवाया बहिश्चक्रे तादृशीः दासीः निःशब्दम् ।....अहो! यदि सा ताः राज्यादेव स्यात् साधिक्षेपं बहिरकरिष्यत....तर्हि तद्राज्यस्य कल्याणोदकार्य नूनं समुपत्स्यत!

प्रयत्नास्तु गूढास्तस्यांग्लस्याधिकारिणः कपटनाटकसूत्रधारस्य विजेतुं तत्तदुच्चपदस्थान् राजपुरुषान् प्रलोभनैस्तैस्तः गूढानां पुरुषाणां माध्यमेन प्रस्तावितैरलभन्त किंचित् साफल्यम् ।....केचन हि राजपुरुषा,-आदित एव विचालिताः स्वामिभक्तेः कन्नूरमल्लप्पावेंकटरावसदृशेः स्वार्थसाधकैः, आदित एव भीताः समस्तभारततवर्षव्यापिन आंग्लसाम्राज्यात्, आदित एव आदित एव विश्वसत्तः प्रचालिते संघर्षे विजयश्रीः समर्थतरान् आंग्लानेव वरिष्यतीति, आदित एव समुत्सुकाः रक्षितुमात्मानमात्मनः

परिवारं आत्मनः ऐश्वर्यं आत्मनः उच्चं समाजिकं स्थानं 'वैतसीं वृत्तिं' आश्रित्य,-निभृतमंगीचक्रुः साहाय्यप्रदानं तेभ्यः योग्येऽवसरे ।

अधिकतरं साफल्यमलभन्त तस्योपजापप्रयत्नाः सर्वजनव्यपिनः धान्याऽऽपूर्ति-शस्त्रागारस्फोटकचूर्णागारसंरक्षणादिष्वापाततः क्षुद्रेष्वपि वस्तुतो महत्वपूर्णेषु तेषु तेषु कार्येषु व्याप्ततेषु निम्नस्तरीयेषु अल्पवेतनेषु राज्यसेवकेषु ।

स्वभावत एव क्षुद्राः अल्पज्ञाः स्वार्थसाधनमात्रलालसा हि ते समीपवर्तिषु बिल्वग्रामादिषु स्थानेषु आंग्लसाम्राज्यसेवायां निरतानां स्वबांधवानां स्वसमानवयोवस्थादिपिशेषानामपि नियमितरूपेण वेतनादिकं सर्वविधसुविधाजातं प्राप्नुवतां निराबाधां जीवनयात्रां यापयतां उदाहरणानि अवलोक्याहर्निशं तत्सदृशजीवनपद्धत्यै गूढं स्पृहयन्तः, 'विप्रकृष्टेष्वपि दुर्गमतमेष्वपि भारतभागेषु प्रसृतं दृढबद्धमूलं नानाविधोत्तमोत्तम-राजपुरुषसेवितमांग्लं साम्राज्यं क्व, क्व चैतन्मुष्टिमेयं क्षुद्रं कित्तूरराज्यमिति उपहसन्तः, 'अनुशासिताः अनेकविधरणस्थलपरीक्षितसामर्थ्याः प्रचण्डबलः आज्ञापालनदक्षाः निपुणाः नवीनतमशतपत्यादिरणयंत्रसंपन्नाः प्रशिक्षिताः आंग्लसेनाः क्व,....क्व चानुशासनहीना पुरातनशस्त्राऽल्पशिक्षिता सशस्त्रमानवसमूहमात्रस्वरूपा कित्तूरसेना'-इति मनसि बलाबले तोलयन्तः, 'भृशं प्रयतमानाऽपि कित्तूरराजमाता नैव लभेत साहाय्यसंपदमणीयस्नीमपि अन्येभ्यः भारतीयेभ्यः नृपेभ्यः, नारुचेष एकोऽप्यवशिष्टस्तेषु यः प्रदाय तस्यै साहाय्यं तया प्रार्थितं आंग्लान् बलवत्तरान् विप्रकर्तुम् उत्सहेत'-इति विश्वसन्नस्तेजोहीनाः वैतसीं आश्रित्य वृत्तिं उन्नमयितुं (!) स्वजीवनस्तरं काक्षन्तः....अदूरदृष्टयः.... अधृष्णुवन्तः कर्तुं राजविद्रोहं प्रकटं,....स्वीचक्रुः कर्तुं साहाय्यं तस्य गूढं समरप्रसंगे ।

नात्र किमपि आश्चर्यम् ।

प्रसरति हि सांसर्गिके रोगे सर्वघातके....दुर्बला यथा यावत् तद्भक्ष्या भवन्ति....न तथा तावत् सबलाः ।

आश्चर्यं तु दक्षाया अपि राजमातुस्तद्विषयेऽज्ञाने ।

चातुर्याद्वांऽऽग्लाधिकारिणः....दुर्दैवाद वा भारतभुवः.... अवश्यम्भावित्वाद्वा भवितव्यस्व....दक्षाऽपि....अर्थकारणनिष्णाताऽपि हि राजमाता नैव शशाक परिलक्षयितुमुपजायप्रयत्नान् गूढान् विपक्षिणः । नैव शशंके क्षुद्राणामपि राज्यसेवकानां स्वामिभक्तिं देशभक्तिं च ।....का पुनः उच्चपदस्थानां राजपुरुषाणाम् ।

आत्मवत् सर्वानिव देशभक्तान् मन्यमाना सर्वेष्वेव परं विश्वास ।

अथवा-नात्राऽपि किमप्याश्चर्यम् ।

इत्थमनभिज्ञैव च तेषां छद्मशत्रूणां....सा....आंग्लसाम्राज्यस्याऽऽसेतु-हिमाचलप्रसृतस्य सर्वातिशायिनः अतुलनीयेन सामर्थ्येन सुष्ठु परिचिताऽपि, 'प्रयासोऽयं सर्वैरपि भारतीयैर्नृपैः संमील्य युगपत् कृत एव समस्ते भारतवर्षे कदाचित् सिद्धिं यास्वति' इति दृढप्रत्ययाऽपि' 'कदाचिदेवान्यो भारतीयः नृपः महत्तमेऽस्मिन् कर्तव्ये स्व साहाय्यप्रदानायाऽऽगमिष्यति' इति दृढप्रत्ययाऽपि, ....भारतमातेव मूर्तिमती पारदास्यश्रृंखलात्रोटनार्थमुद्यता, न मनसि चकार बौद्धिकं शारीरं वा परिश्रमं,....प्रयतमाना स्वबलसंनहनाय दिवानिशम् ।

प्रेरयामास च देदीप्यमानेन स्वोदाहरणेनान्यान् गुरुसिद्दप्पादीन् स्वामिभक्तान् राजपुरुषान् स्वयमपि तथा कर्तुम् । प्रयतमाना च लब्धुं समयं पर्याप्तं स्वबलसंनहनार्थं दर्शयामास प्रकटत आत्मानं समुत्सुकपन्ताय कित्तूरराज्योत्तराधिकारिविवादस्योभयपक्षसंमताय ।

लेखयामास पत्रमेकं सौहार्दभावनापरिप्लुताउच्चतरमांग्लाधिकारिणं

वंगराज्यपालं एल्फिस्टनाख्यं समुद्दिश्य, प्रेषयामास च राज्यविधिवेत्तारं रायप्पं लिंगोपंतं तस्य समीपे तेन सह ।

'समुपेक्षितः खलु सोवर्णोऽवसरः सर्वैरपि भारतीयैः नरेशैः-स्वयं कित्तूरनरेशेनापि....कतिपयवर्षपूर्वमेव....समुत्खननस्यांऽऽग्लसाम्राज्यस्य समूलस्य । तद्धि तदा....स्वशक्तिस्त्रोतोमूलस्य स्वराष्ट्रस्यैव प्रतिस्पर्द्धिभिः फ्रेंचैः श्वेतमहाद्वीपेऽभिभूतत्वात् .... नितान्तमसाहाय्यतामापन्नमतश्च सूत्खात्यमासीत् । न तादृशोऽवसरः पुनः उद्भविता निकटे भाविकाले',- इति सुष्ठु जानात्यपि....प्रेषयामास दूतान् विश्वसनीयान् शीरवादिराज्यप्रमुखानां संनिधौ सह आवाहनपरैः सन्देशैः....स्मारयन् आत्मानं विफलोऽपि सत्प्रयत्नः सार्थक एव' इति वृद्धवचनस्य ।

न क्षणमेकमपि श्लथयामास स्वसैन्यसंनहनप्रयत्नान् । दिवानिशं हि तदन्तर्गतज्वाल क्रोधवह्निः तस्यांग्लाधिकारिणः घोरेणापमानेन जनितः। सुष्ठु जानती च तादृशमेव क्रोधवह्निं ज्वलन्तं हृदयेषु तस्याः प्रजाजनानां.... प्रायातत स्वं....प्रेरयामास च तान् - होतुं सर्वस्वमपि निर्यातनयज्ञे समासन्ने ।

स्वातंत्र्य हि सा तममन्यत ।

## (अष्टमः परिच्छेदः)

अतर्क्यगतिः खलु नियतिः ।

दुर्ज्ञेयोद्देश्या च ।

प्रयत्नाः हि तस्य मिथ्यावादिनः कपटकुशलस्यांऽऽग्लाधिकारिणः फेलुः शीघ्रमेव । स इव समुत्सुकाः विस्तारयितुं स्वाधिपत्यं, स इव तत्पराः विलाययितुमवशिष्टानि भारतीयानि राज्यानि सर्वभक्षके आंग्ल-साम्राज्ये, स इव दक्षाः क्षुद्रस्यापि भारतीयस्य विद्राहांकुरस्य समुत्पाटने....। एल्‌फिन्स्टनादयस्तस्योच्चा अधिकारिणः अन्वमोदन्त तस्य बलप्रयोग-प्रस्तावम्। प्रेषयामासुश्च तत्र तत्र स्थितेभ्यः स्वकटकेभ्यः शतघ्न्यादि-नवीनतमशस्त्रास्त्रसंपन्नानि प्रशिक्षितानि स्वसेनादलानि भिन्नभाषाभाषीणितस्य साहाय्यार्थम् ।

न तु फेलुस्तथा प्रयत्ना अभागिन्याः राजमातुः । न पिशाश्वसुस्तस्याः पत्रे उच्चतमा आंग्ला अधिकारिणः श्रृगालचतुराः । निश्चिक्र्युः ऐकमत्येन तां विनाशयितुं संभाव्य तां भाविभारतीयविद्रोहजननीम् । न मनस्यकुर्वन् तस्याः पत्राणि भारतीया नरेशाः हतबलाः निरुत्साहाः पारदास्य एव श्रेयः स्वं मन्यमानाः आंग्लसाम्राज्यं कल्पान्तस्थायि मन्वानाः परस्परविद्वेषिणः क्षुद्रहृदयाः । प्रेषयामासुः उत्तराणि तस्याः पत्राणां द्वित्रा एव ।

अलभत तु सा प्रत्युत्तरमावाहनस्य वृद्धाः सधनास्तथा निर्धनाः आर्यास्था मुहम्मदीयाः,- ऐक्यमभूपूर्वमापन्नाः संरक्षणं स्वस्वातंत्र्यस्य प्रति-जज्ञिरे। आरेभिरे च समरसंनाहम् । दुर्दैववशान्तु न लेभिरे पर्याप्तं समयं....समुचितं प्रशिक्षणं....नवीनतमशस्त्रसभारम् । विशेषतः नवीनतम-शस्त्रसंभारम् ।

किञ्चिदप्यखिन्ना विदित्वा वैफल्यं स्वप्रस्तावस्यांऽऽग्लराज्यपाल संनिधौ संप्रेषितस्य ।....तद्धि आदित एव निश्चितकलपमासीत्.... । किञ्चित्

खिन्नाऽनुपलभ्य प्रत्युत्तराणि संतोषजनकानि आवाहनपत्राणां रणजीतसिंह-सदृशानां तत्तद्भारतीय राजानां समीपे प्रेषितानां, सा, साक्षात्कृत्य स्वप्रजा-जनन्तमुत्साहं, संतुतोष । अयाचत च नियतिं पर्याप्तं समयं समरसंनहनार्थम् । निपुणं हि सा व्यजानात् यत्तस्याः सेना अगाधदेशभक्त्यनुप्राणिताऽपि आ मरणं योद्धुं कृतदृढनिश्चयाऽपि सीमितसंख्याबला पुरातनसंग्राम-विधानामभ्यस्ता, सदोषशतघ्न्यादिरणयंत्रप्रयोगपरा, संख्ययाऽव्यधिकायाः, पाश्चात्त्याऽऽयोधनविधासु पारंगतायाः, नवीनतमशतघ्न्यादिरणयंत्रप्रयोग-कुशलायाः, यंत्रवदनुशासितायाः आंग्लसेनायाः संमुखं रणांगणे चिरं स्थातु न प्रभविष्यतीति ।

अयाचत नियतिं पर्याप्तं समयं,....न त्वलभत ।

काकचतुरा ह्यांग्लाः, चारचक्षुभिर्सर्वपश्याः, कर्णेजपैः सर्वश्रोतारः, अभिज्ञाः राजमाता सुहृत्संपदर्जनार्थं क्रियमाणानां प्रयत्नानां, विज्ञाः दूरगामिनः प्रभावस्य तेषां सकलीभूतानां, ततः प्रागेव तां समूलं विनाशयितुमेच्छन् । सपरिचिता दौर्बल्यकारणैः कित्तूरसैन्यस्य....तद्दूरीकरणात् प्रागेव तद्विजेतुम् ।

अकुर्वंश्च प्रत्यहं, विना विलम्बं, धारवाडस्थितं स्वं बलं बलवत्तरं दूरविदूरस्थलेभ्यः आह्वतानां भिन्नभाषाभाषिणां कर्णाटदेशजनभावाऽऽ-कांक्षाऽपरिचितानां यंत्रवदनुशासितानां साहाय्येन सैन्यदलानां पदातीनामश्व-रोहिणां विभिन्नशक्तिकशतघ्नीदलसहितानाम् ।

धारवाडस्थितः सः आंग्लः अधिकारी तु, आदित एवाहंमन्यः, आदित एव सामर्थ्यम् आंग्लं कल्पितमपि भयावहं मन्वानः, स्वभावेनैव साहसिकः, प्रत्यहं समापतन्ति स्वसैन्यदलानि वीक्ष्य आध्यातशिराः, अकुतोभयः, स्वं बलभजव्यं मन्यमानः, मासानन्तरमेव चचाल स्वमुख्यालयात् कित्तूरदुर्गमभिलक्ष्य....इच्छन् पराभवितुं राजमातरं बलवत्तर-

स्वबलप्रदर्शनमात्रेण ।

कुर्वंश्च मार्गपतितान् जानपदान् पांसुलपादान् जनान् भयाक्रांतान् स्वबलस्य नियतगणवेषधरस्य नीवनतमरणसंभारस्य प्रदर्शनमात्रेण दर्पोद्धतेन उपससाराचिरादेव कित्तूरदुर्गम् । लेशतोऽप्यसंदिहानः स्वे विजये कल्पयामास स्वं स्कन्धावारं भव्यं दुर्गसंमुखवर्तिनि विस्तृते समभूमिके भूप्रदेशे । कारयामास च पटवासन् पंक्तिशः स्तंभितान्....केंपमर्दिनः पौरस्त्ये भागे सेनाधिकारिणां कृते....पाश्चात्ये च तत्परविराजनानां कृते ।

इत्थं कृत्वाऽऽत्मानमात्मनः अधिकारिणः सैनिकाश्च सुस्थितान्,.... प्रदर्शयन् प्रौढ्याऽऽत्मानमुदारमनस्कं निरर्थककलहानिच्छुकं....प्रेषयामासापरेद्युरात्मनः द्वौ राजपुरुषौ स्टीव्हन्सन्-ईलियटाख्यो द्रष्टुं राजमातरं, आप्तुञ्च, तस्याः निरपवादमात्मसमर्पणम् ।

यदा तु गर्वोद्धतो तौ उपसस्ततुरपावृतं सिंहद्वार दुर्गत्य, जुघुषतुः आत्मानं सर्वसमर्थाया आंग्लप्रभुसत्ताया प्रतिनिधित्वेन, आज्ञापयामासतुश्च तत्रस्थान् शस्त्रोदग्रान् सोपहासं तावेवावलोकयतः सैनिकान् नेतुं तौ तेषां राजमातुः समीपे तत्कालमेव....ते रुरुधुस्तौ तत्रैव, कथयामासुश्च साभिमानं यत्तेषां प्रातःस्मरणीया माता तस्मिन् दुर्गाष्टमीसदृशे पावने दिवसे नैव दूषयेदात्मानमवलोकनेन श्वेतानामिति ।

यदा तु स्कंधावारे स्वीये विराजमानः राजमातुस्तदनुयायिनां चाजय्यप्रत्यर्थिबलसंपद्दर्शनमात्रेण एव प्रत्यागतयोः क्रोधताम्रयोः प्रस्फुरन्नासापुटयोस्तयोः स्वदूतयोर्मुखात् विदांचकाराधिक्षेपमिमं तदा भग्नदिवास्वप्नः कोपविह्वलः अनर्गलवाक् आज्ञापयामास तत्क्षणमेव स्वस्याश्वकृष्णस्य शतघ्नीदलस्य प्रमुखं प्रवेष्टुं दुर्गान्तः बलाद्बन्दीकर्तुञ्च तदन्तःस्थान् सर्वानेव निरपवादम् ।

अरातिना स्वप्नेऽप्यदृष्टचरस्य स्वशस्त्रसंभारस्य प्रदर्शनेनैव केवलेन

तं विजेतुमिच्छन् सः प्रमुखस्तु यदा कित्तूरदुर्गस्य सिंहद्वारं बलादाचक्राम तदा तावत्या कालकलया विदितसर्ववृत्तान्तया राजामात्रा दुर्गरक्षणाय समादिष्टस्तत्र स्वयमुपस्थितः गुरुसिद्दप्पा आदिदेश स्वान् दुर्गरक्षकान् प्रतिरोद्धुमाक्रामकान् तत्रैव, व्यावर्तयितुं तान् प्राणानपि पणीकृत्य, प्रतीक्षितुं चाग्रिमान् आदेशान् राजमातुः ।

अहो प्रभावः स्वदेशभक्तेः ।

नवीनतमशस्त्रास्त्रसंपन्नं प्रशिक्षितमांग्लं तद्बलं क्व, क्व च तत् पुरातनरणसामग्रीसनाथमल्पशिक्षितं कित्तूरबलम् ।

परंतु, अर्थक्रीतं तदांग्लं बलं यदाऽऽचक्राम तत् सिंहवारं कित्तूरदुर्गस्य तदा स्वदेशभक्त्यनुप्राणितं, 'हर हर महादेव!....हर हर महादेव!' इति रणगर्जनया विदारयदिव नभस्तलं तत् कित्तूरबलं,....पश्यत्येव सकौतुकं प्रखरतापे मध्यं गगनस्याध्यारूढे भगवति दिनकरे, निरुद्धश्वासं इवावति समीरणे द्रष्टुं संघर्षमासन्नं,-इयता बलेन प्रतिरुरोध तत्,....इयता वेगेन प्रत्याचक्राम तत्,....इयताऽऽवेशेन जघान तत्....यत्....तत् पाषाणभित्या रुद्धप्रसरमिव, 'युगान्तकालक्षुभितमहोदधिवीच्या प्रचंडवेगयाऽऽक्रम्यमाण-मिवात्मानं मन्यमानं....क्षणमात्रानन्तरमेव निरुत्साहं हतबलं भयाक्रान्तं.... विहाय स्वशस्त्रसभारं सिंहद्वारप्रदेशे एव....आरभत ततः प्रपलायितुम् उद्दिश्य स्वं स्कन्धावारम् ।

अहो उन्मादः विजयावेशस्य!

यस्मिन्नेव क्षणेऽश्वारूढाः सैनिकाः कित्तूरसैन्यस्य....कल्पान्तभयंकरं संहारदृश्यं समुपस्थापयन्तः आंग्ले बले दुर्गसिंहद्वारसंमुखे....अवालोकयन् स्वारातीन् अनुशासितत्वेन प्रशिक्षितत्वेन दुर्जेयत्वेन समस्ते भारतवर्षे विख्यातान्, अनुशासनहीनानिवकुशिक्षितानिव सुजय्यानिव परित्यज्य स्वस्वशस्त्राणि भयकांदिशोकं प्रयत्मायमानान्....तस्मिन्नेव क्षणे 'हर हर

महादेव!....अल्लाहो अकबर!' इति रणगर्जनाभिः विजयोल्लासचण्डाभिः निनादयन्तो दिक्चक्रवालं, समुपेक्ष्यैव आदेशान् स्वसंचालकस्य गुरुसिद्प्पा-महोदयस्य लब्ध्वा संघर्षेऽप्रत्याशितं साफल्यमियत्या ह्रस्वया कालकलया स्वयं चकितस्य,- 'प्रार्थनीयः खलु अग्रिम आदेशः राजमातुः रणनीतिचतुरायाः कर्तव्याकर्तव्यविषये'-इति चिंतयतः-आरभन्तानुधावितुम्, अनुसस्रुश्च तान् निष्प्रतिरोधं तत्स्कन्धावारसीमापर्यन्तं, बन्दीचक्रुश्च त्वारिंशत्संख्याकान् विगलितशस्त्रान् आंग्लान् कतिपयान् भयविस्फारितेक्षणान् तद्बालकान्, कतिपयाश्च अवसन्नगात्रा भयविह्वलास्तन्नारीः, आनिन्युश्च तान् सर्वान्-कांश्चित् अपमानभावनावेशताम्रान् कांश्चिदपशब्दमुखरात् कांश्चिद्भयमूकान् कांश्चित् चीत्कुर्वतः कांश्चित् प्रलपतः-दुर्गाभ्यन्तरे, अर्पयामासुश्च विजयसूचकानिव सगर्वं बंदीकृतान् आरक्तमुखान् शाखामृगानिव सकौतुकं सेवायां राजमातुस्तावत्या कालकलया परिसमापितदुर्गापूजायाः, निर्गत्य पूजागृहात् राजसभाकक्षं प्रविष्टायाः, उपविश्य तत्र युद्धसंचालन-व्याप्ततायाः, समुपलभ्य स्वबलसाफल्यसमाचारान् प्रतिक्षणं निरीक्षक-सैनिकरानीयमानान् प्रसन्नायाः, विज्ञायांग्लसैन्यं प्रद्रावप्रवृत्तं संतुष्टायाः, विज्ञाय स्वबलं तदनुधावनप्रवृत्तं किंचित् सचिंतायाः, ज्ञात्वा च तत् दुर्गं प्रतिनिवर्तमानं समुपजाताश्वासायाः ।

यदा तु सा....धवलवस्त्रा प्रत्यग्रचर्चितपूजाभस्मभासुरललाटपट्टा कुशासनसमुपविष्टा स्वपुरतः सेनाध्यक्षेण समुपस्थापितानां बन्दिजनानां मध्ये आतंकातिरेकप्रकंपमानान् समुच्छुष्कमुखान् विदीर्णवस्त्रान् भयतरल-तारकया दृष्ट्या इतस्ततः लोकमानान् आंग्लबालकान् तत्समानमनोऽवस्थाः रक्तलांछितवस्त्राः शिथिलकेशपाशाः निगडितहस्ता आंग्लमहिलाश्च याचमानयेव तदनुकंपां निःस्पन्दया दृष्ट्या तन्मुखमेव निमालयतीरस्फुटं किमपि किमपि गदतीरपश्यत्....तदा क्षणमेकं न विशश्वास स्वां दृष्टिम् ।

क्षणमेवं जज्वाल च तदन्तः अकस्मात् क्रोधदहनः भ्रूभंगमात्रानुमेयः....

प्रस्फुरन्नासापुटमात्रव्यंग्य: ।

क्षणमेकमेव ।

अन्यस्मिन्नेव हि क्षणे शशाम स: अवलोक्य दृष्टिं तेषां नायकस्य विदितन्मनोवृत्ते:....याचमानामिव तत्क्षमाम् ।

साक्षात्कृत्य हि तेषां तत्कुकर्मस्वामिभक्त्यतिरेकमात्रसमुद्भूतमिति अनुकंपामेवापारां अन्वभवत् सा ।

अगदच्च तान् (कालेन एतावता समपजातापराधबोधान् विगलितोत्साहान् अधोमुखान्) सैनिकान् सरवेदं....मातेव पुत्रान् कृतापराधान् क्षमां मिश्रमाणान् - 'अहो!....बन्दीकृत्य एता निरपराधा महिला: निष्पापान् बालकांश्च नूनं कलंकिता वयमद्य युष्माभि:।....न किं जानीय यूयं-विरुद्धमेतत् अस्माकम् उदाराया भारतीयसंस्कृते:?....मुञ्चत एतान् निगडबंधादस्मिन्नेव क्षणे निष्पापान् ।....मा च कदाप्याचरत उभयलोक-विरुद्धम् ।'

उक्त्वा चेत्थं साऽमोचयत् तान्, समाश्वासयत् सस्नेहं, व्यसृजच्च सबहुमानं विश्वमितुं राजकीयेषु अतिथिकक्षेषु....चकितान्....हृष्टान्.... अविश्वसत: स्वकर्णौ ।

सैनिकांस्तु आंग्लान् सा समादिशत् निक्षेप्तुं राजकीये कारागारे।

गर्वोद्धताया अपि राजमातुरवलोक्य आंग्लं बलं भयाक्रान्ताया आत्मसमर्पणं निश्चितकल्पं मत्वा स्कन्धावारमध्यवर्तिनि स्वे पटवापे विशाले सुखमवस्थित: स: आंग्लोऽधिकारी तु यदा साक्षाच्चकार दयनीयामवस्थां रणांगणात् प्रपलाय्य प्रत्यागतस्य हतावशिष्टस्य स्वसैन्य-दलस्य क्षतविक्षतस्य तदा विस्मयातिरेकाभिभूत एव स नूनमभवत्, चिन्ताक्रान्ताश्च....विदित्वा समाचारं बन्दीभवनस्यांग्लमहिलानां बालकानाञ्च।

दृढं हि अमन्यत सः....यद्राजमाता प्रत्यपकारस्वभावा स्त्रीस्वभाव-विरुद्धामाचरन्ती पीडयेन्नूनं ता अबलास्तान् अगतिकान् बालांश्च । स्वयं कपटकुशलः राजमातरमपि तथैवामन्यत । स्वयं येन केनाप्युपायेन स्वार्थसाधनतत्परः....राजमातरमपि तथैवामन्यत । अमन्यत च यत् सा पणीकृत्य बंदिनीरबलाः बालांश्चाभिलषितं स्वं साधयितुं समुद्यता भवेदिति । न विशश्वास लेशमात्रमपि वचनेषु स्वसेवकानां भारतीयानां, ये, सुपरिचिता उदारेण स्वभावेन राजमातुः, भृशं तमाश्वासयामासुर्यत्-एतादृशीं नीचतां.... एतादृशीं कृपणतां....नैव सा प्रदर्शयेत् स्वशत्रूणामपि विषये....समुपस्थितेऽपि प्राणसंकटे ।

अतः....सः, किञ्चिदपि अपरावृत्तः, स्तोकमपि अविचालितः, स्वनिश्चयात् प्रविलयनस्य संपूणस्य कित्तूरराज्यस्यांऽऽग्लसाम्राज्ये, व्यरीरभत् तात्कालिकात् उपलभ्यस्वबलप्रयोगात्,....दर्शयितुं नाम सौहार्दं कित्तूरराजपरिवारं प्रति,-अतिवाहयितुं वस्तुतः कथमपि समयं अननुकूलम्, आक्रमितुं च दुर्गं प्राप्त एवातिरिक्ते स्वसैन्यदलेऽन्यतः ।

प्रास्तावीच्च दानं ग्रामदशकस्य पारितोषिकत्वेन ।

स्वाभिमानधना राजमाता तु तिरश्चकार तं प्रस्तावं तस्य तत्कालमेव । संदिदेश यत् तस्यास्तदभयप्रदानमांग्लमहिलाभ्यः सवधर्मशिक्षया प्रेरितमासीत्....न तु पारितोषिकलिप्सया । दृढतरं प्रकटयामास च स्वनिश्चयं रक्षितुं कित्तूररायं यथापूर्वं....हुत्वाऽपि सर्वस्वं समरय-ज्ञाग्नौ....पणीकृत्याऽपि प्राणान् ।

'संनिकष्टः नूनं विजयमरणान्यतरत्पर्यवसायी समरप्रसंग' इति समुपजातप्रत्यया, किंचिदप्यविचलिता, प्रत्युत प्रहृष्टा योद्धुं प्रथमं स्वातंत्र्ययुद्धं भारतमातुः, सा यापयामास तं दिवसं स्वसैन्यसन्नहने....प्रेष्य दूतमेकं प्रजविनं सेवायां कोल्हापुरनरेशशस्य, स्वपक्षपातिनः, नातिदूर एव सह

सैन्येन कृतावस्थानस्य, सह संदेशेनाऽऽवाहनपरेण तत्सैन्यस्य पीडयितुं पार्श्वतः उपरोधकं शत्रुसैन्यम् ।

- अप्रतीक्ष्यैव तत्प्रत्युत्तरं....प्रदाने तत्तन्निर्देशानां दुर्गान्ताः एकमभूतेभ्यः प्रस्फुरत्रणावेशेभ्यः सरदारेभ्यः सुबेदारेभ्यः किल्लेदारेभ्य दलवईभ्यश्चौदरीभ्यः, आवाहने शेतसनदीनां, नियोजने निरीक्षकसैनिकानां निरीक्षणस्थानेषु दुर्गप्राकारस्य दूरेक्षणस्तम्भयोश्च गदादिमर्दी-केंपमर्दीवर्तिनोः, संस्थापने उपलभ्यानां शतघ्नीनां महत्त्वपूर्णेषु प्राकारभागेषु, कल्पने च विभिन्नानां प्रतीकारप्रकाराणां विभिन्नेषु विषदाक्रमणेषु संभाव्येषु ।

एवं प्रायेण घटनाक्रमेणाऽऽकुलाकुलः सः दिवसः इयायमन्तम् । खिन्नइव पर्यालोच्य शक्त्यधिकं रणोद्यमं राजमातुः नियत्या वैफल्यशप्तं भगवान् सहस्ररश्मिः क्षीणकिरणः परलोकं जगाम । निःश्वास इव कित्तूरराज्यश्रियः विभाव्य प्राणान्तिकं संकटं दुःखिताया आरभत वातुं मंदं मंदं कटुष्णः सायं समीरः ।

प्रावर्तत च स्वे स्वे कर्मणि सायंतने जनः अन्तर्बहिश्च दुर्गात् घटितघटनाचर्चामुखर आसन्नसमरप्रसंगबद्धपरिकरः ।

राजमाताऽपि, निरीक्ष्य आगामियुद्धसंवाहं, प्रदाय निर्देशान् अवस्थाय प्राकारशिरसि निर्मितेषु निरीक्षणस्थानेषु गतागते द्विषद्बलस्य निरीक्षमाणेभ्यः रात्रिसैनिकेभ्यः, संमंत्र्यापरेद्युस्तनं कर्तव्यजातं सरदारगुरुसिद्दप्पादिभिः प्रधानैः राजपुरुषैः, विचिन्तयन्ती स्वात्मनैव न्यवर्तत राजप्रासादम् । कृत्वा च वेषपरिवर्तं, प्रक्षाल्य हस्तापादं, प्रणम्य सांध्यपूजादीपप्रकाशिता-मुद्वेल्लद्धूपवल्लरीपरिवेष्ठितविग्रहां प्रसन्नवदनकमलां कुलदेवतामूर्तिम्, आचम्य तच्चरणारविंदाऽमृतं, गृहीत्वा तत्प्रसादं, कृत्वा फलाहारं सह स्नुषया धृतव्रतया न्यवर्तत स्वान् कक्षान् विश्रामार्थम् ।

अलभमाना च मनःस्वास्थ्यमणीयांसमपि व्यतीतायामपि अर्द्धयामिन्यां

यदृच्छयेवोदतिष्ठत् स्वशयनात् । अतिक्रम्य च मंदप्रदीपाऽऽलोकितान् शून्यशून्यान् नीरवान् चिरपरिचितान् कक्षान् प्रासादात् निरगच्छत् । स्वीकुर्वाणा च प्रणामान् स्वस्वनियतकर्तव्यस्थलेषूपस्थितानां दष्ट्वा तामागच्छन्तीं सहसा सावधानानां सशस्त्राणां प्रहरिणाम्,....आरुरोह पाषाणसोपानततिं दुर्गप्राकारशिखरयायिनीम् ।

व्यावर्तयामास च पदानि शनैः शनैः दिशि दुर्गसिंहद्वारोपरिवर्तमानस्य कित्तूरराजध्वजस्तंभस्य मन्देन जैशसमीरणेन किंचिद्दोधूयमानपताकस्या-ऽऽव्हयमानस्येव तां सस्नेहम् ।

उपेत्य च तं उपाविशत चिनश्रान्तेवानन्तप्रवासक्लान्तेव तन्मूले कृष्णप्रसृणशिलाखण्डनिर्मितस्य शीतलस्य चतुष्कोणस्य पट्टस्वापरि,.... आरभत च व्यापारयितुं लोचने उत्तप्ते विनिद्रे दिशि-कदाचित् समीप एव प्रकारशिरसि तत्र तत्र दृश्यानां, तर्जनीनामिव यमदूतानां भयंकरदर्शनानां, तितर्जयिषयेवांऽऽग्लानां साहसिकानामुन्नमितमस्तकानां मन्द्रचन्द्रप्रकाशे चकासतीनां शतघ्नीनां, - कदाचिदनतिदूर एव दुर्गादधःलक्ष्यस्य स्तब्ध सायंधूमपटलाऽऽच्छादितविषेष्य प्रज्वलद्रथ्याप्रदीपव्यज्यमानसंनिवेशस्य विश्वस्य तस्याः संरक्षणसामर्थ्ये निद्रितस्येव निःस्तब्धस्य कित्तूरग्रामस्य,- कदाचित् दूरे क्लप्तस्य विप्रकृष्टतयाऽलक्ष्यप्रायविशेषस्य प्रज्वलितत्तालात-प्रकटितावस्थानस्य पटवासमयस्य रिपुस्कन्धावारस्य, - कदाचिच्च दूरदिगन्तप्रसृतानां विरलतरलमिहिकाऽऽच्छादितानां नवमीचन्द्रचन्द्रिकाऽऽ-प्लावितानां समुच्चरत्कादायित्कनैशपतजिरवसंसूचितसंनिवेशानां किञ्चित् दृश्यानां चित्रलिखितानामिव मनोहराणां पचेलिमसस्यानां क्षेत्राणाम् ।

व्यापारयन्त्येव चाऽऽरभत चिंतयितुमासन्नप्रायं निर्णायकं समरप्रसंगम्, ....आरभत चिंतयितुं,-कथं खलु तादृशः समरप्रसंगः....प्राणान्तिकः समरप्रसंगः....श्वेतैः सह....तस्या आ कैशोर्यादिववाभिलषितः....कदाचित् अप्रकट कदाचित् प्रकटं, कदाचित् गूढं कदाचित् प्रकाशं, कदाचित्

मन्दतापं कदाचित् तीव्रतापं....परंतु सदैव....अनवच्छिन्नं....अभिलषित आसीत्, - कथं खलु सः अभिलाष एव - तयोर्मनसि अहर्निशं ज्वलन् - समाचकर्ष बधान च तां तथा प्रेमपाशैः मल्लसूर्येण सह, - कथं खलु सः अभिलाष एवान्ते प्रेरयामास तां, विलोक्य तनयं स्वमकालकालकवलितं विषण्णां रिक्तां, कर्तुं रुचिं स्ववल्लभस्य राज्यप्रशासने सैनिकसामर्थ्यसंवद्धते च ।

'सोऽयमभिलाषो मम फलिष्यत्यचिरादेव',-आरभत चिंतयितुं सा,- 'फलिष्यति - (सखेदस्मितं)-परन्तु न वाञ्छितासु परिस्थितिषु ।'....सर्वथा भिन्ना एताः खलु परिस्थितयः....सर्वथा विपरीताः ।....नास्ति मया सहमम वल्लभः....मूर्तिमान् पराक्रमो भारतवर्षस्य....स्वदेश-भक्तः ।.... दिवंगतः सः असमय एव....अपरिपूर्णमनोरथ एव....भक्ष्यीभूतः क्षुद्रस्य स्वयं पराक्रमहीनस्य परपराक्रमासहिष्णोः तस्य बाजीराव स्याहंभावस्य ।.... नास्ति मया सह मम पुत्रकः....मूर्तिमान् आशाकिरणः नैराश्यघनान्धकारमेदुरासु परिस्थितिषु ।....दिवंगतः सोऽपि असमय एव ।....अपरिपूर्णमनोरथ एव ।....अतृप्तमहत्वाकांक्ष एव ।....प्रापितः दिष्टान्तं नियत्या यत्किंचित्कारिण्या निमित्तीकृत्य क्षेत्रियं राजयक्ष्माणम् ।....नसन्ति मया सह भारतीया राजानः यशवंतराहोलकरसदृशा दुष्प्रसहपराक्रमा दूरदर्शिनो विक्रान्तचरिता,....ज्वलन्त इवाहर्निशं श्वेतविद्वेष ।....विलोपिता खलु तेऽपि नियत्याऽतर्क्यगत्या ।'

'कः खलु सह मयाऽस्यां अग्निपरीक्षायाम्?....अल्पज्ञ्याः...अज्ञः पौत्रः ।....के खलु सहायका ममास्मिन् समरप्रसंगे?....स्वीकायाः राजपुरुषा एव....सरदारगुरुसिद्दप्पादयः अंगुलिगणनीयाः ।....न एकोऽपि,....न एकोऽपि भारतीयः नरेशः साहाय्यकृन्मम ।....अतिनिकटस्यः कोल्हापुरनरेशोऽपि समाश्वासयत्येव मामसकृद्त्वाऽऽश्वासनानि पार्श्वत आक्रमितु श्वेतबलं कित्तूरदुर्गाक्रमणव्यापृतम् ।....अपि सः पालयिष्यति स्वं वचनं समुपस्थिते

परीक्षाक्षणे?....अपि सः....अथवा - नियतिरेव जानाति तत् ।....किमिति सः....बलवानपि अभिमानधनोऽपि',....शीखनरेशः...रणजीतसिंह....न मनः करोति मम सहाय्यानुरोधे - न जाने !'

'समरसाधनसामग्र्यपि मम एकाकिन्या मित्रसम्पद्विहीनायाः....पुरातनी । ....(सखेदं) या खलु शतप्रयादयः मम सेनायां....ता अपि श्वेतेभ्यः एव क्रीतपूर्वाः ।'

'कथ खलु....एतावत्या साहाय्यसम्पदा....एतावत्या रणसामग्र्या च....अहम्....निःसहाया....अग्निपरीक्षायामस्यां उत्तीर्णा भविष्यामि?.... कथं खलु शक्ष्यामि प्रतिरोद्धुं समुन्मूलयितुं च श्वेतकुष्ठं....शरीरं भारतमातुः वेगेनाप्रतिहतेन आक्रामत् ?'

'यदि हि मम वल्लभः...मम मल्लः....संकटेऽस्मिन् मम समीपेऽभविष्यत्...., मम मल्लः....मूर्तिमान् पराक्रम आर्याणां....सविग्रहः स्वाभिमानो भारतीयानां....सशरीर आत्मविश्वास अस्माकीनानां....तर्हि....तर्हि ....आवाभूमौ....मिलित्वा....महत्तमे कार्येऽस्मिन् सिद्धिं प्राप्तुं समर्थौ अभविष्याव । अभविष्याव शक्तौ समूलमुन्मूलयितुं, महारोगमेतं...., लभयितुं च भारतमातरं तस्याश्चिरलेपितं चिराकांक्षितं स्वातंत्र्यम् ।'

'मल्ल!....मल्ल!....कुत्र गतस्त्वं....? विहाय मामेकाकिनीम-सहायाम्....? मल्ल!....कुत्र गतस्त्वम् ?....कुत्र गतः?'

'अत्रैव अस्मि....प्रियतमे!....अत्रैव....तव समीप एव'-सहसाऽभज्यत तस्याः सा औदासीन्यगुर्वी चिन्ताकलुषिता विचारतंद्रा....समीपत एवाऽऽ-गच्छद्भिः अमृतमयेरिव शब्दैः ।

उन्नमय्य च मुखं....चिन्ताक्लान्तं क्षणमात्रपूर्वं....श्रवणसमकालमेव विस्मयातिरेकप्रस्फुरन्नासापुटं....प्राहिणोत् नेत्रे विस्फारिते आशोज्ज्वले तद्दिशि ।

अपश्यच्च....स्वपार्श्वे एव धृत्वा दक्षिणेन हस्तेन ध्वजस्तम्भं तिष्ठन्तं अनुष्णीषं सन्ततनिपतत्सुधाकरकरोद्भासितकपोलं चिकुरिलमस्तकं शिशिर-करकरचुम्ब्यमानकर्णकुण्डलं मृदुलस्मितमनोहरतरौष्ठमुद्रं भावगंभीराभ्यां सानुकम्पाभ्यां अमृतधारा इव वर्षदभ्यां आत्मविश्वासमिव संक्रामयद्भ्यां नयनाभ्यां तामेव ध्यायन्तं स्ववल्लभं....मल्लम् ।

पिबन्त्येव च विस्मयविस्फारिताभ्यां नयनाभ्यां तद्रूपं प्रियकरस्य-चिरतृषितेव-आकण्ठम्....अशृणोत् पुनस्तामेव वाणीममृतमिव वर्षन्ती कर्णचषकयोः....'सदैव तु समीपे तव....आसम् अहम् !....अस्मि!....स्यां च सदैव! क्षणमात्रमपि नापासरं....सांनिध्यात्व ।....समीप एव तवासम् आवयोः पुत्रकस्य प्राणोत्क्रमणसमये....तस्य श्वे तस्यापभाषणसमये.... ह्यस्तनघटनाचक्रसमये च ।....समीपे एव तव स्यां भाविन्यपि समये।.... कठिनतरेऽपि परीक्षाक्षणे ।....घोरतरेऽपि संकटसमये ।....तनमा कुरु खेदं....मत्वाऽऽत्मानमेकाकिनम् ।....मा ग्लपय स्वं चित्तं....परिकल्प्या-ऽऽत्मानमसहायम् ।....यदि ते क्षुद्रस्वार्थान्धाः कृपणाः भीरवः स्वल्पवीर्या भारतीया राजानः जागतास्तव साहाय्यार्थं....तर्ह्यपि न हानिः ।.... परमोदात्तसंकल्पबलमस्ति तव साहाय्यकृत् ।....अहमस्मि तव साहा-य्यकारी ।....असंख्याः शूराः पुत्राः भारतमातुः....पृथ्वीराजशिवराज-सदृशाः....असंख्या वीराः कन्याः भारतमातुः....देवलदेवीजिजामाता-सदृशाः....अदृश्या अपि....सन्त्येव तव साहाय्यार्थं सदा संनिहिताः।.... तच्छिरसि कृत्वाऽऽशीर्वचनानि भारतमातुः, पाथेयीकृत्य च शुभाऽऽशंसनानि एतेषां भारतमातुरपत्यानां....गच्छ रण, क्षेत्रे....तव कर्मक्षेत्रे....श्वः । प्रयतस्व च समूलमुन्मूलयितुं दास्यमेतत् श्वेतानां....मूर्च्छयदस्माकं न केवलं शरीरम्....अपि तु आध्यात्मिकं सामर्थ्यमपि ।....सफलीभविष्यति तव प्रयत्नः ।'

'त्वमेव तु अवदः असकृत् सत्संकल्पस्य दाता भगवान् हरिरिति।'

'मा कुरु ग्लानिमणीयसीमपि मनसि....विचिन्त्य बलं स्वं तुच्छं, तच्च विषदो महदिति ।....किमनया तुलनया?....न किमणीयानपि स्फुलिंग: भस्मीकरोति महान्तमपि घासोच्चयम्....?'

'यदि नैव सफलीभविष्यति....न भवतु नाम!....हानेस्तस्या उत्तरदायित्वं न त्वयि विनिश्चेष्यन्ति भाविन: इतिहासलेखका:.... कथाकारा: ।....अपि तुत्वद्वर्तमानकालिकेषु भीरुषु कृपणहृदयेषु भारतीयनृपेषु भोंसले-शिंदे-होलकर-निजामसदृशेषु....ये, (सकुत्सम्) आहूता अपि त्वया,....त्वद्भगिन्या,....साहाय्यार्थं संकटेऽस्मिन् नाऽऽजग्मु: ।.... अवसन्नगात्रा: किंकर्तव्यविमूढा अकर्मण्यतामेव शरणं जग्मु:.... आकर्णयन्तोऽपि अनाकर्णयन्त आक्रोशं भारतमातु: श्वेतै: पदैर्दल्य-मानाया: ।.... प्रियतमे!....'

'....असफलीभवन्नपि सफलीभवष्यिति नूनं तव प्रयत्न: । अद्य विफलीभूतोऽपि स: प्रेरयिष्यत्येवान्यां कामपि दुहितरं भारतमातु: कर्तुं प्रयत्नं भाविनि काले । तस्याश्च....अन्यम् । स्फुलिंगकणमात्मिकेयं (-निरवच्छिन्नेत्यहो आश्वास:!-) किस्मंश्चित् नियतिनिश्चिते भाविनि काले दाक्ष्यत्येवैतत् श्वेतसाम्राज्यं....वर्तमाने काले बलाढ्यतमं जगतीतले.... असूर्यास्तंपश्यमिति ख्यातिमभूतपूर्वं गतं साम्राज्यम् ।....मोक्ष्यत्येव च भारतमातरं निगडेभ्य: पारदास्यस्य ।'

'अथवा....यद्भावि तद्भवतु नाम ।'

'त्वं तु उत्तिष्ठ....प्रियतमे!....अस्मादवसादपंकात् ।....अवसाद: न तव प्रकृति: ।....अपि तु-उत्साह: । प्रकृतिं स्वां पुनरापन्ना कुरु नियतिप्रदत्तं स्वं कर्तव्यं निरासक्तेन अन्त:करणेन....समर्पणबुद्धा ।'

'उत्तिष्ठ....प्रियतमे!....उत्तिष्ठ....'युद्धाय च युज्यस्व ।'....अहम् अस्मि तव समीपे,....स्यां च समरसमयेऽपि....तदुत्तरमपि ।'

पिबन्त्येव च याममृतमयीमिव संजीवनीं वाणीं कर्णचषकाभ्यां.... अपश्यत् तं स्ववल्लभं....क्रमशो विरलतां....विरलतरतां....पारदृश्यतां.... अदृश्यतां च गच्छन्तं....मृदुलस्मितमनोहरतरमुखममुद्रम् ।

पुनरुज्जीवितेव च तेनाऽऽश्वासनेन स्ववल्लभस्य....विज्ञाय तन्मेऽवस्थां तत्समक्षमवतीर्णस्य....उदतिष्ठत् तस्मात् शिलापट्टात्'....अस्पृशत् तं ध्वजस्तम्भ अनुबुभूषयेव स्ववल्लभस्पर्शसुखस्य...., क्षणमेकमतिष्ठत् निश्चला रोमांचितशरीरा समनुभूयेव तत्,....उन्नामयत् स्वमुखकमलं देदीप्यमानं वज्रकल्पसंकल्पतेजसा,....अक्षिपत् दृष्टिमधिक्षेपमयीं दिशि रिपुस्कन्धावारस्य, समयेनैतावता मिहिकापटलेनाऽऽच्छादितप्रायस्य,....अवालोकयत् महानवमीचन्द्रबिंबं तस्य पुनर्मेलनस्याद्भुतस्य एकमात्रं साक्षिणं,.... व्यावर्तयामास च पदानि धीराणि विश्रामकक्षं स्वं समुद्दिश्य ।

## (नवमः परिच्छेदः)

अथ....अपरेद्युः....ब्राह्मे मुहूर्ते....अनस्तंगत एव रात्रिविश्रामसाक्षिणि नक्षत्रमण्डले, निःश्वास इवावलोक्य दृढं संकल्पं राजमातुः समुपजाता- ऽऽश्वासाया भारतभुवः मंदं मंदं वहति प्राभातिके समीरणे, उच्चरत्सु किन्तूरनगर्यां तद्देवतायतनेभ्यो भक्ति विह्वलेषु प्रातःपूजास्तवगीतध्वनिषु.... समुत्थाय कृतेष्टदेवतासंस्मरणा राजमाता चेन्नम्मा....निर्वर्तितनित्यक्रिया शुचिर्भूता संपूज्य राजकुलदेवतामाचम्य तच्चरणामृतं गृहीत्वा तत्प्रसादं प्रणम्य कलिमथस्वामिनं स्वीकृत्य तदाशीर्वचनानि नतमस्तकेन.... प्रशान्तस्वान्ता....समरप्रसंगोचितं वेषं परिदधौ । तामनु तत्सनुषा तत्पौत्रश्च ।

निर्गत्य च सह ताभ्यां प्रासादात् समवेक्ष्य युद्धसंनाहं सार्वत्रिकं, कृतमंत्रणा सेवायामुपस्थितैः युद्धोचितवेषैः प्रस्फुरद्रणोत्साहैः गुरुसिद्दप्पादिभिः प्रधानैः राजपुरुषैः सह....संतुष्टा....समवलोकयितुं रिपुसंनाहं दुर्गप्राकारशिर आरुरोह ।

अवलोक्यैव तां वीरोचितवेषां....कित्तूरराज्यधृतिमिवाऽऽततायिप्रतीकाराय धृतविग्रहां....भारतमातरमिव दुष्टशासनाय कृतमूर्तिपरिग्रहां....उज्जगाम.... समुल्लंघ्य सर्वा मर्यादाः....समुपेक्ष्य ज्येष्ठकनिष्ठभेदं....महान् रणघोषः.... तत्रैकत्रभूतानां स शस्त्रानां सैनिकानां कण्ठसहस्रेभ्यः....'हर हर महादेव!.... हर हर महादेव! इति....विदारयन् गगनवितानं....प्रकम्पयन् दिङ्मण्डलम् ।

कर्णपतित एव स महासागरगर्जनभयंकरः रणघोषोऽधिकमेव समुत्तेज- यामास तं कुटिलमांग्लमधिकारिणं स्वस्कंधावारमध्यवर्तिनि पटगृहे एव तिष्ठन्तं निखाय द्वेषपूर्णां दृष्टिं कित्तूरदुर्गे । प्रेरयामास च तं विनिश्चेतुं कपटप्रयोगम् । तत्क्षणमेव हि स निश्चिकाय यत् -'प्राग्युद्धारभात् विमोचनं-येन केनाप्युपायेन-बन्दीकृतानाम् आंग्लानां सैनिकानां नारीणां बालकानां चात्यावश्यकम् । प्रवृत्तमात्रे युद्धे साऽचिन्त्यस्वभावा गूहनशीलाऽ-

विश्वसनीयाऽत्यधिकमहत्त्वाकांक्षिणी राजमाता पणीकरिष्यति तान् स्वमनोरथपूर्त्यर्थम्....स्वसंरक्षणार्थं वा । हनिष्यति च तान् निर्घृणस्वभावा कलयित्वैव स्वपराजयमवश्यंभाविनम् । तत् अनारभ्य युद्धप्रसंगं.... भापयित्वा तां स्वबलबलप्रदर्शनमात्रेण....आदौ विमोचनीयाः सर्वे आंग्ला बन्दिनः । विमुक्तेषु च तेषु आक्रमणीयः सः दुर्गः ।'

विनिश्चित्य एवं स्वात्मनैव....बहिरागत्य पटवासात्....आह्वाययत् स्वसेवकमुखेन स्वसेनाधिकारिणं ब्लैकाभिधम् । आदिशच्च तं उद्घोषयितु-मन्तिमां सूचनाम् ।

सः सेनाधिकारी....अपि....आपूरितः रणोत्साहेन, आध्मातशिराः स्वसेनाबलेन....अन्वतिष्ठत् तस्याऽऽदेशं शब्दशः अविलंबमेव । अनायत् स्वसैनिकैः स्वस्कंधावारमध्यवर्ति महाकायं शतघ्नीद्वयं पुरस्तात् पिहितस्य पौरस्त्यस्य दुर्गमहाद्वारस्य । अस्थापयत् निखिलमपि स्वं बलं पादतिकमाश्वं च तत्पृष्ठतः । उत्साहातिरेकविलुप्तविवकश्च प्रौढ्या स्थापियत्वाऽऽत्मानं पुरस्तात् तस्य शतघ्नीद्वयस्य....उज्जुघोष स्वरेण सगर्वेण....'रे रे.... दुर्गान्तर्वर्तिनः । शृणुत....शृणुत अंतिमां नः सूचनामिमाम् । यदि यूयं....घटिकाभ्यन्तर एव....न आत्मानं....समर्पयिष्यथ....तर्हि....अस्माकं एतत् शतघ्नीद्वयं....द्वारमेतत् विदारयिष्यति । अत्रः प्रवेक्ष्यति अस्माकमेतद्बलं दुष्प्रसहेन वेगेन, हनिष्यति च युष्मान् सर्वान् निरपवादम् ।....तत्.... अवलम्ब्य विवेकं....अविलंबमेव....शस्त्राणि स्वानि समर्पयत उद्घाट्य द्वारम् ।'

उद्घोषयत एव तस्येत्थं सगर्वं त्रिवारं....सहसा समुद्घाट्य तद्द्वारं बहिर्निश्चक्राम....बलं राजमातुश्चेन्नम्मायाः....प्रस्फुरद्रणावेशं, 'हर हर महादेव! हर हर महादेव' इति तुमुलया रणगर्जनया प्रकम्पयत् प्राकारभित्तीः, निनादयत् दशदिशः ।

अवलोकयतामेव च विस्मयजडानां व्यात्तमुखानां किंकर्तव्यमूढानामांग्ल-सैनिकानां....बिभेद आत्मानं तदिद्वेगेन तृयोर्दलयो:,....आरभत च....एकं राजमाता चेन्नम्मयाऽश्वारुढया युयुत्सुवीरवेषया समुद्धृतभीषणखड्गया मात्रा दुर्गयेवासुरसंहारप्रवृत्तया स्वयं नीयमानं....अन्यच्च अश्वारूढेन कवचपिनद्धेन रणगर्जनामुखरेण चपलाचपलखड्गभीषणेन गुरुसिद्दप्पेन....कर्तितु तद्रिपुबल-मवसन्नगात्रम् । आरभत कर्तितुं तत् कर्तरिकेव सूत्रालीम् ।

प्रलयकालोद्वेल्लितपयोराशेर्महोर्मेरिव दुष्प्रसहवेगस्य तस्य बलस्य प्रथमेनैव कल्लोनेन धराशायिनौ अभवतां दुर्गमहाद्वारस्योभयो: पार्श्वयोस्तिष्ठन्तौ, गवोद्धतौ, समवलोक्य तदपान्नियमाणं क्षणमेकमुल्हसितौ, दृष्ट्वा तद्वमदिव सशस्त्रसैनिकप्रवाहं क्षणेऽपरस्मिन्नेव चकितौ भयजडौ प्रद्रावप्रवृत्तौ ब्लेक्-डैटानाख्यौ सेनाप्रमुखौ ।

द्वितीयेन कल्लोलेनात्ययं....शतघ्नीद्वयस्य पार्श्वतस्तिष्ठन्, हस्तेन दक्षिणेन श्मश्रुं स्वामारक्तवर्णां वारं वारं सकुत्सं स्पृशन् अन्य: शतघ्नीदलप्रमुख: स्वेलभिध:....नियुक्त आदेष्टुं तन्महाकायं शतघ्नीद्वयं विदारयितुं दुर्गमहाद्वारं विरतायामेव त्रिवारघोषणायाम् । साप सत्ययं प्रागेव बोधात् अभिक्रमणस्य तस्य तडिद्वेगस्य ।

अपरस्मिन्नेव क्षणे समस्तमांग्लं शतघ्नीदलसैन्यबलं तत्पृष्ठतोवर्ति पंक्तिबद्धमश्वसादिबलं च....अबुद्धाताऽऽत्मानं तेनाऽऽवेशप्रचंडवेगेन कित्तूरबलेन उभयापार्श्वाभ्यां विद्युद्वेगेन परिवेष्ट्यमानम् । आरभत च प्रयत्नं योद्धुं पणीकृत्य प्राणान् । अलभत तु साफल्यम्....आंशिकमेव । तदपि कतिपयक्षणपर्यन्तमेव ।

प्रस्फुरद्रणावेशास्ते समुद्वेल्लितदेशभक्तिभावा: कित्तूरसैनिका:....साक्षात् स्वमातरं खड्गहस्तां चेन्नम्मां रणशिरसि दुर्गायमाणां वीक्ष्याधिकमेवोत्तेता:.... रिपुसैन्ये नवीनतम-रणसामग्रीसंनद्धेऽपि प्रशिक्षिततरेऽपि द्रव्यक्रीते तथाऽव-

स्कन्दमारभन्त यथा तत्....अक्षमं तदाक्रमणं सोढुमधिकतरं....
कतिपयक्षणानन्तरमेव प्रपलायितुं ततः अचेष्टत ।

अवस्थाय पृथक् पार्श्ववर्तिनि उन्नततरे भूभागेऽद्धभिक्रमं स्वसैन्यस्य साभिमानं निरीक्ष्यमाणः....सः आंग्लः अधिकारी तु....साक्षात्कृत्य तदाकस्मिकम् आक्रमणं राजमातुः क्षणमात्रं विस्मितः, समवलोक्य ब्लेक्-डैटान्-स्वेलसदृशान् स्वान् वरिष्ठान् सेनाधिकृतान् तृणपुरुषानिव निष्प्रतिरोधं हतान् चकितः, निरीक्ष्य कित्तूरसैन्यं विद्युद्वेगेनाग्रे सरत्....संवेष्टयत् स्वं महत्वपूर्णं शतघ्नीदलं अश्वं च सैन्यं क्षणमात्रं किंकर्तव्यमूढः, क्षणमात्रानन्तरमेव स्वसैन्यं प्रद्रवप्रवृत्तमवलोक्य क्रोधान्धः....आरुरोह तुरंगममेकं समीपवर्तिनम्....अचालयच्च तं विद्युद्वेगेन दिशि राजमातुः युद्धमानायाः समुद्धृतखड्गः....प्रलपन् निरर्गलानपशब्दान् ।

अवलोक्य तं दूरात्....समुपसर्पन्तं वेगेन राजमातरं व्यापृतमनस्कां युद्धे भीषणेऽन्यैः रिपुसैनिकैः....सह....समुत्क्षिप्तखड्गं च प्रहर्तुं तां....तस्या अन्यतमोंऽगरक्षकः सईदबालप्पाभिधः....नातिदूरवर्ती स्वस्वामिन्याः....रिरक्षिषया तस्याः....विव्याध तं स्वेनाग्नेयेन शस्त्रेण दूरादेव....सिद्धहस्तः।

विद्धः उरसि स थॅकरे....उद्गच्छद्रुधिरधाराक्लिन्नवेषः....तत्क्षणमेव पपात तुरंगामाद्रणांगणे वसाऽसृग्मांसपिच्छिले....प्रसारितहस्तः....विगतप्राणः।

पतितमेवं तं दृष्ट्वा कित्तूरसैनिकानां दलमेकं, नातिदूर एव युद्धमानं रिपुसैनिकैः सह, हर्षोन्मादेन गर्जत्, परिववार तमपरस्मिन्नेव क्षणे, लुलाव च तच्छरीरं तीव्रैः खड्गप्रहारैः ।

तदन्यतमः अंधद्वीप्यः सैनिकः कज्जलाभः हिंस्रदर्शनः महाकायः रामहबशीनामधेयस्तु जग्राह खड्गाऽग्रेण तच्छीर्षं विस्फारितेक्षणं व्यात्तमुखं रुधिरार्द्रचिकुरम्, आरोप्य च तदग्रे निशिते स्वकुन्तस्य, उद्धृत्य च तदुन्नतम् आरभत नर्तितुं रणांगणे,....उद्घोषयन् 'हतो दुतात्मा! हतो

दुरात्मा!' इति ।

अपरस्मिन्नेव क्षणे....सर्वेऽपि रिपुसैनिका....अवलोक्य स्वनायकमस्तकं विस्फारितमार्जारेक्षणं बीभत्सदर्शनमित्थं नर्त्यमानं कुन्ताग्रे उच्चैर्धृते प्रत्यर्थि-सैनिकान्यतमेन विगलितधैर्याविशेषाः....प्रारभन्त द्रातुं रक्षितुं स्वान् प्राणान् भयकान्दिशीकाः ।

कित्तूरसैनिकाश्च, नीयमानाः रणशिरसि बीरवरेण्यैः गुरुसिद्दप्पारा-यण्णसमैः, अनुसस्नुस्तान निरुच्छ्वासं, जघ्नुस्तेषां प्रध्यात् कतिपयान्, बन्दीचक्रुश्च अनेकान् ।

विनष्टेषु रिपुसैनिकेष्वेवमपध्वस्तेषु च ते रुधिरार्द्रवेषा अपि क्षतविक्षत-विग्रहा अपि हताहतबंधुजना अपि....तिरस्कृत्य सर्वदुःखानि विगणय्य स्वक्षतीः....सोत्साहं प्रतिन्यवर्तन्त स्वं दुर्गं....विजयोल्लासेन गर्जन्तः....नृत्यन्तः....कुन्तान् खड्गान् समुत्क्षिपन्तः....जयजयकारेण स्वमातुश्चेन्नम्मायाः गगनवितानं विदारयन्तः ।

'क्व....क्व....ते....अधमाः कन्नूरमल्लप्पादयः....ये वैयक्तिकस्वार्थान्धाः क्षुद्रलोभपरवशा विनष्टविवेका मातरं नः....एवं....तेषां श्वेतानां हस्ते समर्पयितुमचेष्टन्त-' इति गर्जन्तः....प्रतिशोधावेगशोग्राः....अन्वेषयामासुस्तान् दुर्गान्तः प्रतिनिलयस्थानं, बन्दीचक्रुस्तान् आवासस्य कस्यचित् शून्यशून्यस्य भूगर्भकक्षे निलीनान् भयावसन्नभागान्नान् प्राणरिक्षिषया पशुनिर्विशेषया दीनं दीनं किमपि जल्पतः, चकर्षुस्तान् समुच्छुष्कमुखान् मये दुर्गान्तर्वर्तिनः विस्तीर्णस्य प्रांगणस्याऽपारजनसन्दोहव्याकुलस्य समुद्वेल्लितविजयोल्लास-मुखरस्य, चक्रुश्च-पश्चिमाशाप्रांगणे प्रेवेष्टमिच्छति भगवति सवितरि-यमसदनातिर्थान् भोक्तुं स्वमहापातकफलानि-दलयित्वा तच्छरीरहतकानि मदिरोन्मत्तैः क्रोधान्धैः रक्तलोचनैः गन्धगजैः....समक्षं राजप्रासादवलभि-समुपविष्टायाः रक्तारक्तयुयुत्सुवेषाया विजयिसेनाधिकारिगणपरिवृताया

दृढबद्धौष्ठपुटाया: कठोरमुखमुद्राया मातुश्चेन्नम्माया: ।

देशद्रोहिणस्तान् अन्विषन्त एव ते ददृशु: कतिपयान् स्वीव्हन्सन्-इलियट्-आदीन् आंग्लान् असैनिकान् अधिकारिण:, कांश्चिच्च भारतीयान् आंग्लसेवकान् श्रीनिवासादीन् धारवाड-बिल्वग्रामादिनगरेषु कर्तव्यरतान्, सहांऽऽग्लसेनया आगतान्, विलोक्य स्वसेनायास्तादृशं पराभवं प्रपलायितान्, त्रातुं स्वप्राणान् निलयेषु केषांचित् नारिकाणां निलीनान्, भयमूकान्, विभ्रान्तलोचनान्, बन्दीचक्रुस्तान्, उपस्थापयामासुश्च स्वमातु: समक्षं.... चकांक्षुश्च तस्या अनुज्ञां तानपि दण्डयितुं तथैव ।

परन्तु - प्रकृत्यैव दयाशीला राजमाता, दृष्ट्वा तेषां बन्दिनां करुणकरुणामवस्थामधिकमेव द्रवितान्त:करणा, आज्ञापयामास तान् उपरन्तुं तादृशात् क्रोधान्धात् आचरणात् ।

उद्घोषयामास च स्वरेण दृढेन -

'बन्दिन: एते .... असैनिका: । .... अतस्तदनुरुपस्यैव व्यवहारस्य योग्या:। .... अपि च-परीक्षितव्य आदौ एषां व्यवहार:....अत्रत्य:। सदोष तस्मिन् ....एते तत्तद्दोषानुसारं दण्डनीया: ।....अन्यथा वैरावसानपर्यन्तं स्थापनीया: कारावासे योग्यसुविधोपपन्ने,....मोचनीयाश्च तदवसाने ।'

साक्षात्कृत्य तस्त्र्याश्चित्तौदार्थं प्रभाविता, अनुभूय आत्मन: क्षुद्रहृदयत्वं लज्जितास्तेऽपि तथैवान्वतिष्ठन् ।

यदि हि राजमाता, सत्येवावसरे, आज्ञां तादृशीं नादास्यत् तर्हि ते द्रव्यक्रीतावराका: प्राणै: स्वैर्वंचिता अभविष्यन् ।

एवंप्रकारकेण घटनाचक्रेणाऽऽकुलाकुल: वासर: स: अन्तभियाय। निवेदयितुमिव स्वमुखेन वृत्तान्तं शौर्यस्य राजमातु: साक्षाद्दृष्टं पश्चिमदिग्वधूं

.... प्रविवेश तदंगणे भगवान् सहस्रकिरणः । समुपजाताश्वासाया कित्तूरराज्यश्रियः सुखनिःश्वास इव मंदं मंदं वातुमारभत कदुष्णः सुरभी समीरणः । आतुर इवावलोकयितुं राजमातुः प्रतापचिह्नानि, कित्तूरदुर्गस्याऽऽ-समन्तिके भूप्रदेशे सर्वत्र विकीर्णानि....आरुरोह पूर्वाचलशिखरमारक्तबिंबः सुधाकरः । आरभन्त स्वं स्वं गृहं गन्तुं प्रासादप्रांगणेऽवलोकनार्थं प्राणदण्डस्य देशद्रोहिभ्यः प्रदीयमानस्यैकमभूताः पौराः, चर्चन्तस्ताद्दैनिक-घटनाजातं सावेशं, वर्णयन्तः आहोपुरुषिकया स्वसैनिकानां पराक्रमं, उपहसन्त आंग्लसैनिकानां भीरुत्वं, अधिक्षिपन्तः, कन्नूरमल्लप्पादीनां देशद्रोहं, तर्कयन्तः स्वस्वामिन्या अंतिमं विजयमवश्यंभाविनं, उत्प्रेक्षमाणा तस्यान्तिमविजयस्य निखिलभातवर्षे प्रभावान् भाविकाले नातिविप्रकृष्टे संभाव्यान् । सैनिकाश्च तथैव चर्चामुखरास्तथैव सार्वशास्त्रथैवाऽऽशावादिनः....शतगुणितरणोत्साहाः ।

न तु राजमाता चेन्नम्मा ।

सा हि....निवृत्तेषु गृहीत्वा तदनुज्ञां स्वं स्वं निलयनं गुरुसिद्दप्पादिष्ठु प्रमुखेषु राजपुरुषेषु, निर्जनायां मंददीपप्रकाशितायां प्रासादवलभ्यां तथैव समुपविष्टा, श्रान्ताऽपि नातुरा विश्रामाय....अवलोकयाञ्चकार संपूर्णं घटनाक्रमम् आ अहर्मुखात् तदवसानपर्यन्तं सिंहदृष्ट्या,....तोषयामास स्वात्मानं पराक्रमेण स्वसैन्यस्यापेक्षानुरूपेण,....उद्विग्नाऽपि हननेनांग्ल-प्रतिनिधिः रणांगणे....खिन्नाऽपि देहदण्डेन देशद्रोहिणां....पर्यवस्थापता-ऽऽत्मानमचिरादेव,....प्रारभत च कर्तुमनागतचिन्ताम् ।

चिरं च सा....मूर्तिरिवावस्थिता....सुधाकरबिंबनिरवातनयना....विचार-यामास परिणामान् अवश्यम्भाविनस्ताद्दैनिकस्य युद्धप्रसंगस्य ।....दूरदर्शिनी सा न क्षणमेकमपि अन्वमोदत स्वात्मानं विजयोल्लासेन विस्मर्तुं याथार्थ्यं परिस्थितेः । दृढं हि सा विशश्वास यत् पराजयेन तेन किंचिद्विस्मितोऽपि श्वेतः रिपुः....अचिरादेव प्रकृतिं स्वां स्थिरां पुनरापन्नः....प्रहरेत्....नातिचिरादेव

....प्रहरेत् शतगुणितेन बलेन....प्रहरेत् समूलोन्मूलनपर्यन्तं तत्प्रतीकारस्य। निपुणं हि स्वऽजानात् स्वभावं तस्य....रक्तपिपीलिकासमं,....अभ्रान्तं.... प्राणान्तप्रतिशोधपरम् । 'कथमिव अहं स्यां समर्था प्रतीकर्तुं तं प्रहारं'- चिरमचिन्तयत् सा आत्मनैव ।

उदतिष्ठत् आसनात् मध्यमध्यारोहति गगनस्य सुधाकरे....कृतदृढ-निश्चया,....निरीक्ष्य च दुर्गस्याऽऽत्मरक्षोपायान्....अवलोक्य चाधो दृश्यमानं विजयदीपोत्सवं नागरिकैः क्रियमाणं सस्मिता, कृतफलाहारा, कृतेष्टदेवता-संस्मरणा न्यवर्तत स्वापाय....विचिन्तयन्ती स्ववल्लभस्य व्यतीतायां निशायां दृष्टस्य....अनुभवन्ती तस्य सान्निध्यं साश्वासम् ।

प्रहरमात्रव्यतीते चापरेद्यवि....निर्वर्तितनित्यक्रिया शुचिर्भूता कृतेष्टदेवता-पूजना कृतफलाहारा जगाम चौकीमठम्....आश्रमं वंदनीयस्य कुलपरंपरा-ऽऽगतस्य कित्तूरराजकुलगुरोः प्रातःस्मरणीयचरितस्य स्वामिनः।

तत्र च कृतस्वागता शिष्यवरेण्येन स्वामिन आश्रमद्वारे....समुपससर्प स्वामिनम्....आश्रमप्रांगणमध्यवर्तिनः गगनचुंबिशिखरस्योत्पतितपतत्रि-कुलनीरवस्य प्रातःसमीरकम्प्यमान-सूर्यप्रकाशोज्ज्वल-निर्मलपर्णसंभास्याश्वत्थ-वृक्षस्य मूले विराजमानं, प्रागेव विशेषदूतमुखेन संसूचितैर्विगणय्य व्यतीतसमरक्षतीः महता उत्साहेन पूर्वमेव समयात् समुपस्थितैः गुरुसिद्दप्पा-संगोल्लीरायण्णा-अवरादीवीरप्पा-हिंमतसिंह-नरसिंहरावादि प्रमुखराजपुरुषैः यथायोग्य आसने समुपविष्टैः परिवृतम् । नमस्कृत्य च तं विनीतभावेन, स्वीकृत्य च नमस्कारान् दृष्ट्वा तामागच्छन्तीमुत्थितानां बद्धप्रणामांजलीनां तेषां राजपुरुषाणां....तस्य समीप एव....मृगचर्मासने एकस्मिन् समुपाविशत्।

स्वामी तु....प्रशान्तः....स्नपयन्निव तां 'दुग्धकुल्ययेव' प्रसन्नयाऽऽशी-र्वचांसि इव वर्षन्त्या स्निग्धया तपःपरिपूतया दृशा....शुश्राव तस्या मुखात् विगतदिव सस्य घटनाचक्रस्य वृत्तान्तं क्रमिकम् ।

उवाच च मन्द्रस्वरम् - 'एवं निपतितः खलु श्वेतप्रहारः । प्रवृत्ता नः सर्वेषामग्निपरीक्षा । उत्तीर्णाश्च वयं तस्योमेतावत्कालपर्यन्तम् । उत्तीर्णाश्च भविष्यामः....अन्ततोगत्वा ।....न्याय्यो हि अस्माकं पक्षः ।....न्याय्यमेव जयते ।....कदा खलु विजयभीरस्मान् करिष्यति अन्तिमरूपेण....तत् खलु भाविकालगुहायां निगूढम् ।....भवतु नाम तत् तथा । न वयमातुराः ज्ञातुं तत् । कर्मण्येवाधिकारो नः ।....न फले ।'

'सुनिश्चितन्तु एतावत् - प्राग् अन्तिमविजयात् भूयस्य आपदः.... महत्य आपदः....आपाततोऽनुल्लंघनीया इव भासमाना आपदः.... अभिभविष्यन्ति अस्मान् । प्राणान्तिकानि संकटानि भापयिष्यन्ति अस्मान्। तद्....धैर्यावष्टम्भः खलु सुतरामावश्यकः । आवश्यकः सर्वेषामेव कृते।'

'सत्यस्य संकल्पस्य दाता भगवान् त्रास्यत एव नः सर्वान् ।'

'तत् कीदृशः खलु रणव्यूहः....परिकल्पितस्त्वया?....न एकोऽपि क्षणः व्यर्थमेव यापयितव्योऽस्माभिः निमज्ज्यात्मानं विजयोल्लासे सर्वथा समुचितोऽपि ।....प्रथमं स्वं प्रहारमित्थं व्यर्थीभूतमवलोक्य नावसादं चित्तस्य क्षणिकमपि अनुभवेत् श्वेतः । प्रत्युत-वैयर्थ्येनानेन किंचिद्विस्मितोऽपि सः....अचिरादेव प्रकृतिं स्वां स्थिरां प्रतिपद्येत । प्रहरेच्च नातिचिरादेव। प्रहरेत् शतगुणितेन बलेन । प्रहरेत् समूलोन्मूलनपर्यन्तम् ।'

'निपुणं हि स जानाति....यदयं देशभक्तिस्फुलिंगः....आपाक्षुद्रोऽपि.... तत्क्षणमेवानिर्वापितः....प्रसरिष्याति नूनं सर्वस्मिन्नापि दक्षिणभारते.... दावाग्निवत्....अप्रतिबंधः ।....निपुणं हि स जानाति यत्-निर्वासितोऽपि बाजीरावे सुदूरम् इतः सन्ति अस्मिन् भारतभागे तत्र तत्र कोल्हापुर-निपाणी-सातारासदृशानि....आपाततः शान्तान्यपि अन्तर्ज्वलद्विद्रोह-वन्हीनि....भारतीयराज्यानि....येष्वयं प्रचण्डं रूपं....पश्यतामेव तेषां दिङ्मूढानां-धारयति-इति ।'

‘अस्माकं रिपुः....वणिक्स्वभावः....अनागतविधाता....प्रयतेत प्रतिक्षणम् अहर्निशं....सन्ततम्....एकत्रकर्तुं स्वं बलं विभिन्नभाषाभाषि प्रसृतं तेषु तेषु स्थानेषु ।....प्रहरेच्च एकत्रभूते तस्मिन्....शतगुणितेनाऽऽवेशेन ।’

‘तदस्माभिरपि कार्या प्रयत्नानां पराकाष्ठा....अस्मादेव क्षणात् प्रभृति प्रतिकर्तुं तम् ।....तत् कीदृशी खलु कार्यपद्धतिश्चिंतिताऽऽयुष्मत्या?’

राजामाता चेन्नम्माऽपि, अनुभूय साम्यं स्वामिनो विचारधारायाः स्वीयया सह समुपजातप्रत्यया, शान्तेन दृढेन स्वरेण तं भाविसंघर्षव्यूहं तस्मै तत्रोपस्थिताय राजपुरुषवृन्दाय च व्याचख्यौ ।

निश्चिकाय तम्....उचितविचारविनिमयानन्तरम् । प्रत्यावर्तत प्रासादं विचारमग्ना मध्यमध्यारूढे भगवति सहस्रकिरणे ।

प्रारभत च तमवतारयितुं कार्यरूपेण ।

## (दशमः परिच्छेदः)

इत्थं सुवितर्क्य 'कथं खलु रिपुः प्रवर्तेत कर्तुं प्रहारमग्रिमं भीषणतरं'-राजमाता चेन्नम्मा किंचिदप्यनुत्तेजिता प्रावर्तत तत्प्रतीकारप्रयत्नेऽनेकविधे-

सर्वप्रथमं सा निश्चिकाय दर्शयितुमात्मानं पश्चात्तप्तमिव सद्योघटितेन घटनाचक्रेण, भीतमिव बलाढ्यतरात् श्वेतसामर्थ्यात् अवश्यंभाविप्रकोपात् सत्सु तस्य सैनिकेषु अधिकारिषु प्रतिनिधौ च हताहतेषु,....प्रेषयामास च स्वभावनात्यक्तीकरणार्थे स्वप्रतिनिधिं श्रीनिवासरावं उच्चतराणां धारवाडस्थितानां आंग्लानामधिकारिणां सन्निधौ,....प्रकटयामास च स्वेच्छां तन्मुखेन यत् - यदिनाम बलाढ्याऽऽग्लप्रभुताऽऽभ्यन्तरं स्वातंत्र्यं कित्तूरराज्यस्य यथापूर्वं मानयिष्यति तर्हि साऽपि समापयिष्यति प्रचलितं वैरिभावं पारंपरिकपरस्परमैत्रीभावविनाशकमविलंबमेव ।

'न खलु शक्यः श्वेतो विजेतुमेवंविधेन सामोपायेन । कृतनिश्चयो हि सः वर्द्धयितुं स्वं साम्राज्यमस्मिन् भारतवर्षे विलाप्य तस्मिन् क्रमशः-प्राप्त एव समुचितेऽवसरे-सर्वत्र प्रसृतानि तमोऽभिभूतानीव निर्वीर्याणि क्षुद्राणि तानि तानि ऐहदेशिकराज्यानि'-इति निपुणं जानती सा प्रारभत तत्समकालावच्छेदेन एकत्रकर्तुं स्वराज्यस्याऽऽभ्यन्तरिकं सामर्थ्यं यावच्छक्यम् ।

'विराजति राजनि राजसिंहासने नेतुं स्वसेनाः परचक्रप्रतीकाराय रणांगणे, तासामुत्साहः नूनमन्यादृशो भवति'-इति तथ्यं मनोवैज्ञानिकं निपुणतया जानती सा-निगूह्य स्वमनसि घोरं शोकं व्यतीत एव मासे मृतस्य स्वपुत्रस्य राज्ञः शिवलिंगरुद्रसूर्यस्य-कारयामास नातिविप्रकृष्ट एकस्मिन् शुभे दिवसे राज्याभिषेकं स्वपौत्रस्य सवाईमल्लसूर्यस्य शास्त्रोक्तेन विधिना, कुलपरंपरागतया विधया, महताऽऽडंबरेण । आपूरयामास च

प्रजाजनान् - विशेषत: सैनिकान् - भावनयाऽपारया राजभक्त्या:, नूतने प्रियदर्शनेऽल्पवयसि स्वनृपे केंद्रीभूताया: । पश्यन्त्या एव तस्या: सकौतुकं....समस्ता: कित्तूरराज्यस्य प्रजाजना, आदित एव प्रथमलब्धेन विजयेन स्वे सामर्थ्ये समुपजातप्रत्यया, अधिगत्य तं नूतनं राजानं तत्संमानसंरक्षणार्थमेकीभावपूर्वं भेजु:, प्रतिग्रामं प्रतिनगरं प्रतिप्रदेशं सैन्यरूपेणाऽऽत्मानं संघटयामासु:, परित्यज्य कार्यान्तराणि आजग्मु: प्रतिदिनं कित्तूरराजसमीपं 'हर हर महादेव....अल्ला हो अकबर' इति रणघोषणाभि: निनादयन्तो दिङ्मण्डलं, निवेदयामासुश्च स्वसेवास्तत्समर्पिता:। तन्मध्यात् राजमाताऽनवरतमचिनोत् सुदृढान् पुरुषान्, निर्ममौ अचिरादेव महतीं सेनां, कारयामास च यावच्छक्यं तां प्रशिक्षितां आधुनिकीषु समरपद्धतिषु विवक्षानुसृतासु । विशाले कित्तूरदुर्गे साऽकरोत् संचयं धान्यस्य स्फोटकचूर्णस्य च षाण्मासिकम् । अस्थापयच्च कित्तूरदुर्ग-प्राकारशिरसि तत्र तत्र शतघ्नी: भयावहा: ।

किंचिदप्यप्रतिहता पूर्वतनेन वैफल्येन सा पुनरप्येकवारं प्रेषयामास-समयाभावात् कोल्हापुर-निपाणी-सातारादिसंनिहितराज्यप्रमुखानामेव संनिधौ स्वान् विश्वसनीयान् दूतान्, प्रार्थयामास च तत्साहाय्यं....भगिनीव बंधूनां विपद्ग्रस्ता ।

परन्तु-अहो दैवदुर्विलास: !

तनमध्यादेकाकी कोल्हापुरराज्यप्रमुख एव दधर्ष प्रेषितुं तत्प्रार्थना-प्रत्युत्तरं,....तदपि संदिग्धम् ।

अन्ये तु क्षीणवीर्या मौनमेव कार्पण्यसूचकं भेजु: क्षुद्रा: ।

आंग्लानां दक्षिणभारतायुक्तश्चपूलिनोऽपि सर्वत्र प्रसृतै: स्वैश्चार चक्षुर्भि: व्यापारान् इमान् राजमातु: प्रत्यहं परीक्षमाण:, सामप्रस्तावे तस्या: क्षणमेकमपि अविश्वसन्, 'अयं विद्रोहस्फुलिंग: सत्येव समये भस्मसात्

करणीयोऽस्माभिः,....अन्यथा प्रबृद्धोऽयं धक्ष्यति साम्राज्यमस्माकं' इति दृढं विश्वसन् निर्णायकयुद्धाय महान्तं संनाहमकरोत्....अत्वरितमिवाऽऽत्मानं प्रदर्शयन्....वस्तुतोऽहोरात्रं व्यापृतः ।

तस्मात् प्रथमपराजयादनन्तरमेव धारवाडसमीपवर्तिषु तेषु तेषु प्रदेशेषु अकस्मात् प्रस्फुटिता विद्रोहवह्नयः....क्षुद्रा अपि....तत्क्षणं पद्दलिता अपि.... तादेशिकजनभावनासूचकाः....तं संभाव्येन संकटेन परिचितं चक्रुः, दृढतरीचक्रुश्च तं स्वे संकल्पे ।

युद्धसंनहनार्थं पर्याप्तं समयमधिगन्तुमुत्सुकश्च सोऽपि, राजमातेव, आत्मानमपि संधिं कर्तुमुत्सुकामिव दर्शयामास,....नियुयोज स्वप्रतिनिधित्वेन एडनाख्य बिल्वग्रामस्थं स्वमधिकारिणं चतुरं कर्तुं संधिचर्चाः राजमाता सह,....वस्तुतः समुत्सुकश्च विनाशयितुं तां रणांगणे....इयेष तस्याः निरपवादमात्मसमर्पणम् आदौ,....ददौ चाऽऽश्वासनं विचारस्य तदभीष्टा- ऽऽभ्यन्तरस्वातंत्र्यप्रदानस्य तदनन्तरमेव ।

मुम्बापुरीयः एल्फिन्स्टनाख्यः राज्यपालोऽपि, चॅपले आदीनां राजपुरुषाणां रणांगणे तादृशेन वधेन समुत्तेजितः, कित्तूरराजवंशस्य सिंहासनात् प्रभ्रंशनमेव तादृशस्य 'अपराधस्य' समुचितं प्रायश्चित्तममन्यत ।

सर्वे एव नूनमांग्ला अधिकारिणः, उच्चावचाः, कित्तूरराज्यस्वांग्ल- साम्राज्ये आत्यंतिकं विलयमेवावाञ्छन् । ते हि दृढममनयन्त-कित्तूरराजवंशः, आदित एवं स्वतंत्रवृत्तिः, यदि सत्येव समये समूलं न विनाशितः.... तर्हि-लब्ध्वाऽवसरं, कृत्वा गुप्तं साहकार्यसन्धिं पोर्तुगीजैः सह, वर्द्धयित्वा स्वं सामार्थ्यं, भाविनि काले दुःखद....दुरुत्रवेयः भविता ।....भविता चान्येषां भारतीयराजानां किंकर्तव्यमूढानां प्रात्यहं गहनतरेण औदासीन्येनाभिभूयमानानां कृते उत्साहबिन्दुः....देदीप्यमानः ।

इत्थं कित्तूरराज्यस्य समूलोन्मूलनार्थं कृतनिश्चयास्ते कुटिलास्ते आंग्लाः

यं समयमवायुः राजमात्रा सह संधिवार्त्तया तं ते स्वसैन्यानि सुदूरवर्तिभ्यो भारतभागेभ्यः समाक्रष्टुं कित्तूरमाभितस्तानि नियोक्तुं च युयुजुः । मुम्बापुर्याः मैसूरनगर्याः मद्रासनगराच्च महान्ति स्वदलानि अत्याधुनिकशतघ्न्यादि-संपन्नानि अश्वारुढानि समाचकर्षुः, स्थापयामासुश्च तानि अमितः कित्तूरदुर्गस्य....आधिपत्ये एकस्योच्चतमाधिकारसम्पन्नस्य लेफ्टिनंट्-कर्नल् डैकॉनाख्यस्य सेनाधिकारिणः ।

आगामिनं समरप्रसंगं अतीतेन श्रीरंगपट्टनसमरप्रसंगेन तुल्यमहत्त्वं गणयन्तस्ते तत्तुल्यानि बलानि युयुतुः ।

तावताऽपि अकृतकृत्यंमन्याः, परमोत्सुका हर्तुं राजमातुः साधारणजनसाहाय्यसंपदं, ते, अधिचक्रुः चैप्लिनं उद्घोषयितुं सडिंडिमनिनादं ग्रामीणेषु क्षेत्रेषु कित्तूरराज्यस्य यत् 'यः कोऽपि भारतीयः त्यक्त्वा पक्षं आत्मघातिनां उद्वृत्तानां भजेत पुनः न्याय्यं पक्षं आंग्लप्रभुसत्तायाः.... सः....उद्वर्तनोऽपि तत्कालपर्यन्तं....लभेत क्षमां निरपवादाम् ।....ये खलु क्षेत्रिकसैनिकाः परित्यज्य पक्षमुद्वृत्तानां भक्ष्यन्ति पक्षं न्याय्यमांग्लानां ते स्वानधिकारान् भोक्ष्यन्ति यथापूर्वम्....अबाधितान् ।....ये निरपराधाः उद्दण्डकित्तूरराजवंशसेवकाः शरणीकरिष्यन्ति पक्षमांग्लानां....ते समुचितं पारितोषिकं प्राप्स्यन्ति ।....ये भूतपूर्वस्य कित्तूरराजस्य पारिवारिकाः जनाः....ते यदि भविष्यन्ति आंग्लपक्षपातिनस्तर्हि ते स्वपदव्यनुरूप-जीवननिर्वाहाय पर्याप्तं धनराशिं नियमितरूपेण लप्स्यन्ते ।'

एताभिरपि घोषणाभिरनाश्वस्ताः पापाः कित्तूरराजवंश एव पारस्परिक-भेदभावनां उद्भावयितुं कर्तुं च तत्संभावनां सार्वजनीनवितर्ककुतर्कविषयाम् उद्घोषयामासुः 'यदि नाम दिवंगतस्य कित्तूरराजस्य भार्या ग्रहिष्यति पक्षमांग्लप्रभुसत्तायास्तर्हि सा स्वपत्युः संपदं, राजकीयकोषागारे संचितां, अक्षुण्णां प्राप्स्यति ।'

न त्वापुः स्वल्पतममपि फलं रचोद्घोषणानुरूपमधन्याः ।

किंचिदप्यखिन्ना एतेन वैफल्येन शृगालचतुरास्ते प्रायतन्त किंवदन्तीभिः जनसाधारणमध्ये स्वयं प्रसारिताभिः, समुत्पादयितुं धारणां यत्-न राजमाता नापि राजपत्नी विग्रहस्यास्य मूले, अपि तु गुरुसिद्दप्पादयः राजपुरुषां एव....अंगुलिगणनीयाः । ते हि निर्मर्यादस्वमहत्वाकांक्षापरवशा वांछन्ति बालकमनधिकारिणमेकमज्ञानकुलशीलं आरोप्य कित्तूरराजसिंहासने शास्तुं राज्यं स्वयमेव ।....राजमाता राजपत्नी च, तद्हस्तनिपतिते, वस्तुतो वांछतः अन्तं विग्रहस्य स्वानिष्टमात्रपर्यवसायिनः, परं तु स्तः किंचिदपि कर्तुम् असमर्थे' इति ।

न त्वलभन्त किमपि....ऋते उपहासात् सर्वतः ।

यथैव ते साक्षादकुर्वन् स्वप्रयत्नानां वैफल्यं....अधिजग्मुश्च विश्वासं स्वसामर्थ्यस्य प्रत्यहमुपचीयमानस्य....तावता कालेन वृद्धिं पर्याप्ता-मधिगतस्य....तथैव ते निश्चिक्युः प्रहर्तुं अन्तिमं प्रहारं....भूमिसात्कर्तुं चाजय्यं कित्तूरदुर्गं उद्वृत्तैः कित्तूरराजवंशावशेषैरधिष्ठीयमानं....तावता कालेन स्फूर्तिकेंद्रतां भारतीयानां प्राप्तम् । न्यदधुश्च प्रशासनं प्रदेशस्याभितः कित्तूरदुर्गं विद्यमानस्य हस्तेषु सेनिकानां प्रशासकानाम् ।

एवं कृत्वा सर्वान् जानपदान् जनान् भयावसन्नगात्रान् निष्क्रियान्.... ते समादिशन् एकं बलं मेजर ट्यून्सन्-अभिधेन सेनानायकेन नीयमानं समुपसर्तुं रिपुदुर्गमुत्तरतः,....अन्यद्दलं कर्नल् मॅक्रियॉड्-अभिधेन तेनानायकेन नीयमानं दक्षिणतः,....अन्यच्च लेफ्ट्नंट् कर्नल् वॉकराभिधेन सेनानायकेन नीयमानं पश्चिमतः ।

परिवेष्टयामासुश्च निरुच्छ्वासमचिरादेव कित्तूरदुर्गं पिहितसर्वद्वारं सशस्त्रसैनिकसहस्त्रपरिरक्ष्यमाणप्रकारशिरसं स्तब्धं, मृगमिवावगुरणभीतं, सर्वतः परिवर्द्धितसामर्थ्या-स्तस्मिन्नेव समये मैसूर-चित्रदुर्ग-मद्रास-आरकोट-

सोलापुर-पुण्यपत्तनादिस्थानेभ्यः संप्राप्तैः स्वसैन्यदलैः ।

दुर्गप्राकारशिरसि तत्र तत्रावस्थापितैः, रिपुसैन्यस्य तत् संनहनं संचलनं विनियोजनाहर्विवं निरीक्षमाणैः निरीक्षकसैनिकैः प्रतिक्षणं संसूच्यमानाऽपि राजमाता न क्षणमेकमपि भयमनुबभूव ।

'रिपुणा प्रत्यहं परिवर्द्धमानबलेन कित्तूरप्रतीकारस्य समूलोन्मूलनार्थं बद्धपरिकरेण पञ्चविंशतिसहस्राधिका स्वसेना विकरालमुखशतघ्न्यादिसुसज्जिता रणरंगेऽवतारिता दुर्गं परितः'- इति परिकल्प्याऽपि नैराश्यं नानुबभूव । न वा विषादं .... मनसि-कृत्य स्वल्पत्वं तुच्छसाधनत्वञ्च स्वसैन्यस्य ।

दृढं हि सा विशश्वास यत् तस्या मित्रं, कोल्हापुरनरेशः, पञ्चसहस्राधिकपदातिसैन्येन एकसहस्राधिकतुरगसादिबलेन सप्तशतघ्नीदलेन च सहितः, मुम्बापुर्याः विवादग्रस्तं प्रदेशमभिलक्ष्य कृतप्रस्थानं दक्षिणभारतायुक्तं चॅप्लिनं गूढमनुसरन्, नातिदूरे एव कित्तूरदुर्गात्, मुनोल्ल्याः समीपे क्लृप्तस्कंधावारे....निभृतमास्तेऽभ्यवस्कन्दनसंधिं प्रतीक्षमाणः इति ।

दृढतरं च सा विशश्वास - 'कर्मण्येवाधिकारस्ते, न फलेषु कदाचन ।'

परिकल्पयन्ती समरप्रसंगं निर्णायकं समीपोपस्थितं सा प्रेषयामास द्वित्रान् वर्मितान् सशस्त्रातश्ववारान् बहिर्दुर्गात् प्राच्येन द्वारेण कोल्हापुरनरेशं प्रति - सह संदेशेन - 'युगपत् तयोराक्रमणमभीष्टफलदायि स्याद्'- इति संसूचयता ।....अवलोकयामास प्राकारशिरसि राध्वजस्याधस्तात् तिष्ठन्ती, गतागते रिपोः दूराल्लक्ष्यमाणस्य दूरेक्षिकया निरीक्षमाणा, सा, तान्, प्राच्यादुर्गद्वारादीषदपावृतात् विद्युद्वेगेन बहिर्निर्गच्छतः, सवेगं दिशि मित्रस्कंधावारस्य गहनवनराजिसमाच्छन्नतयाऽदृश्यप्रायस्य समुपसर्पतः, अपरस्मिन्नेव क्षणे सावधानैः रिपुसैनिकैः प्रयुक्तैराग्नेयास्त्रैः विदीर्णवक्षःस्थलान्, समुत्क्षिप्तहस्तान्, समूलोन्मूलितान् वृक्षानिव भयातिरेकेण कांदिशीकं

पलायमानेभ्यः स्वतुरगेभ्यः अधो निपततः,....गतप्राणान् ।

'स्वभावत एव शृगालचतुरः, तत्रापि पूर्वतनेनास्मदाक्रमणेन विद्युच्च-पलेनाऽऽकस्मिकेन सावधानतरतां प्रतिपन्नः रिपुः नैव दद्यात् स्वल्पतममपि अवसरं मित्रसंवादस्य,....स चात्यावश्यकः,....विना तं युगपदाक्रमणमावयोः न संभवि ।....अतो....यथा नाम रिपुरसावधानतरतां प्रतिपद्येत तथा कर्तव्यम्' इति मनसि कुर्वाणा च प्रकारशिरसोऽवतीर्णा सा निर्धारयामास विमोचयितुम् आंग्लराजनैतिकबंदिद्वयं स्टीव्हन्सन्-ईलियटाख्यं स्वबंधनात्, प्रेषयितुं तत् रिपुसंनिधौ, दर्शयितुं चेत्थं स्वाम् इच्छां सन्धिवार्त्तायाः।

विनिश्चित्य चैवं तथैवान्वतिष्ठत् साऽविलंबमेव ।

बन्दिद्वयं तु तत्, निपत्य रिपुहस्ते भयगलितगात्रमप्यादौ, शीघ्रमेवानुभूय उदारहृदयत्वं राजमातुः बहूपकृतमिवाऽऽत्मानं मन्यमानं, तत्रापि साक्षात्कृत्या-ऽऽत्मानमकस्माद्विमेचितमधिकमेव भावविह्वल, नमस्कृत्य राजमातरं दुर्गाद्-बहिरागतम्, अक्षतशरीरं, सर्वथा कुशलि, पद्भ्यामेव स्वस्कंधावारं समुपसपत् यदाऽदृश्यत आंग्लस्कंधावारप्रहरिभिः,....तदा समुदभवत् तेषां मनसि महान् विस्मयः....तमनु च हर्षः ।....यदा तु तत्समुपस्थाप्यत प्रहरिभिः स्मयमानमुखैः स्वप्नमुखस्य चॅपलिनाख्यस्य पुरस्तात् तदा तत् बहु बहु प्राशंसत उदारहृदयत्वम् अतिथिदाक्षिण्यञ्च राजमातुः, भूरि भूरि वर्णयामास कुशलं दुर्गस्थानां सर्वेषामेव राजबन्दीनां, भूयो भूयोऽनुरुरोध च स्वप्रमुखं समापयितुं तं विग्रहं मैत्रीपूर्णया संधिवार्त्तया कितूरराज्यायाऽऽभ्यन्तरिकस्वातंत्र्यं प्रदास्यन्त्या ।

परंतु....पाषाण इव कठोरहृदयः....पर्वत इवाविचलः, पविरिवदाहक-स्वभावः....सः तत्प्रमुखः न स्वनिश्चयात् अणुमात्रमपि अचलत् ।

## (एकादशः परिच्छेदः)

आदिदेश चाऽऽक्रमितुं स्वं सैन्यम् अभिषेणनसमुत्सुकं....अपरेद्युः.... गगनमध्यमध्यारुढे अवलोकयितुमिव पराक्रमं राजमातुश्चेन्नम्माया भगवति सवितरि।

आरभत च तत् आग्रमणं....सर्वतः....अविरतम् ।

कित्तूरदुर्गसैन्यमपि, समवलोक्य प्रत्यर्थिबलं प्रस्थितं स्वदुर्गात्, 'हर हर महादेव, 'अल्लाहो अकबर' इति विविधाः रणगर्जनाः कुर्वत्, आरभत प्रतिकर्तुम्....अक्षुण्णमनोबलम् ।

आरभत प्रतिकर्तुं....विभज्याऽऽत्मानं विभिन्नेषु दलेषु....नीयमानं रणशिरसि वीरवरेण्यैः अवर्दिवीरप्पा-गोलंदाजहिंमतसिंह-नरसिंहराव-गुरुपुत्रप्पा-संगोल्लिरायण्णा-चनबासप्पा-गजवीरादिभिः....प्रेर्यमाणं प्रतिक्षणं अश्वारुढया तडिल्लतयेव सर्वत्र विचरन्त्या रणावेशेन स्वेन सर्वानापूरयन्त्याऽऽततायि-शासनार्थं धृतविग्रहयेव कित्तूरराज्यलक्ष्म्या, कृतशरीरपरिग्रहयेव भारतमात्रा, राजमात्रा चेन्नम्मया ।

शाययितुं चासंख्यान् रिपुसैनिकान् रणांगणे प्रतिक्षणम् ।

परंतु-संख्ययाऽल्पं....अद्यतनसाधनसामग्र्याहीनं, एकाकि कित्तूरबलं क्व....क्व च संख्यया महत् विविधात्याधुनिकरणसामग्रीसमृद्धम्.... अनेकदासराजसेनोपबृंहितम्....आंग्लबलम् ।

अहो दैवदुर्विलासः !

तदहरेव....विलयं गते प्राक्कलयित्वा भाविनीं घटनां विषण्णे इव मंदप्रभे प्रभाकरे....शोके इव भारतमातुः अमाय हृदि बहिरुत्प्लवमाने सर्वतः प्रसरति प्रज्वलदलातसहस्रधूमाऽऽकुलाकुले घनान्धकारे,....विजिते कित्तूरदुर्गसमीपवर्तिनिकेम्मनमर्द्याख्ये उपदुर्गे विदीर्णप्राये शत्रुसैनिकैः,.... अवस्थाय रणरंगे प्रतिकारं कुर्वाणा बहवः कित्तूरसैनिका वीरगतिम्

अलभन्त ।....अवशिष्टाश्च शिरसि कृत्वा राजमातुरादेशम् अपसृत्य ततः मुख्यं दुर्गमाश्रयितुं बाध्या अभवन् ।

आनिशं युद्धमाना आंग्लसैनिका, श्रान्ता अपि सद्य आगतैः प्रत्यग्रर्द्धसैनिकदलैः परिवर्द्धितसामर्थ्याः,....प्रातरेवापरेद्युः,....विजित्य विषादं मनसिकृत्य सत्प्रतिपक्षस्यावश्यंभाविनं अन्तिमं जयं पुनरुज्ज्वलितप्रभै इव प्रखरप्रतापे प्रभाकरे पूर्वाचलशिखरम् आरोहति सति,....आरभन्त आक्रमणं तीव्रतरम्, आविष्टा इव केनापि प्रेतात्मना, गदादिमर्द्याख्य-स्यान्यतरस्योपदुर्गस्य। तत्र विद्यमानाः कित्तूरसैनिका, आनिशं युद्धमानाः, प्रतिक्षणं क्षीयमाणबलोः, कुतोऽप्यनुपचीयमानसामर्थ्याः, नरसिंहरावादीनां राजपुरुषाणां नेतृत्वे पणीकृत्य प्राणान् युद्धमाना अपि, अचिरादेव पराभूता, अन्तेऽपसृत्य ततः, दुर्गं मुख्यं शरणीकृत्य स्वान् प्राणान् रक्षितुं समर्थाः अभवन् ।

इत्थं विजित्य गदादिमर्दी-कम्मनमर्द्याख्यौ उपदुर्गौ....अहोरात्रं प्रचलिताद् युद्धादनन्तरं....साक्षात् कित्तूरदुर्गस्य समीपमुपसृतेषु रक्तारक्तवेषेषु आरक्त-लोचनेषु भीषणदर्शनेषु आंग्लसैनिकेषु....तेषां सेनानीः कर्नल् डीकान् रणावेशमत्तः आदिदेश स्वान् द्वारभंजनप्रशिक्षितान् सैनिकान् भंक्तुं बलाद्द्वाराणि मुख्यस्य दुर्गस्य....तत्पश्चाद्वर्तिर्नश्चान्यान् सैनिकान् प्रवेष्टुं दुर्गान्तः भग्नेषु एव तेषु ।

प्रवृत्तेष्वेव तेषु तथा कर्तुं राजमाता चचेन्नम्माऽऽनिशं युद्धमानाद्धपि किंचिदप्यश्रान्ता अवस्थाय प्राकारशिरसि चेष्टितानि रिपोरवलोकमाना क्रूरनिश्चयकठोरतरमुखमुद्रा आदिदेश स्वान् शतघ्नीसैनिकान् दग्धुं समीपतरं समीपतममुपसर्पयतः द्वारभंजकसैनिकान् तदनुयायिनश्चान्यान् अनवरतया नारकीयवह्निकटाक्षनिभयाऽग्निगोलकवर्षया ।

अन्वभयच्च, अपरस्मिन्नेव क्षणे, अपारम् आश्चर्यं तीव्रतमं सन्तापं रुगाध खेदं निरतिशयं निर्वेदञ्च निशम्य भयविवर्णमुखेभ्यः विस्मयमूढेभ्यः

स्वशतघ्नीसैनिकेभ्यः सत्वरं तत्समीपमुपसृतेभ्यः कल्पान्तभयंकरं समाचारं 'आर्द्रीकृतानि सर्वाण्यपि शतघ्नीस्फाटकद्रव्यचूर्णानि सुरक्षितान्यपि कैरपि नराधमैः उभयलोकविनष्टैः देशद्रोहिभिः विगतायामेव निशायां,-व्यापृतेषु तेषु प्राणान्तिकदुर्गप्रतिकारे,-आर्द्रीकृतानि - इति ।'

आदिशच्च क्रोधकर्कशस्वरा स्वसैनिकान् कतिपयान् अन्वेष्टुं तान् देशद्रोहिणस्तत्क्षणमेव ।

तदादेशसमकालमेव क्रोधताम्रमुखास्ते, हिंस्राः श्वापदा इव, आरभन्त अन्वेष्टुं, विशालानि भांडारगृहाण्येव स्फोटकद्रव्यचूर्णानां, अलभन्त अचिरादेव तदन्यतमस्य उपेक्षिततमस्य कोणैकदेशे घनान्धकारदुर्लक्ष्यविशेषे निलीनौ निश्चेष्टौ दुर्गंधिना कृष्णेन प्रावारकेण केनचिदावृतशरीरौ भयजडौ आर्द्रार्द्रवसनौ वीरसंगप्पा-हुर्कड्लीमल्लप्पपाख्यौ देशद्रोहिणौ द्वौ नराधमौ, अघ्नंश्च तौ स्वीकृतापराधौ तत्क्षणमेव दलयित्वा मदोन्मत्तगजराजपादैः....लब्ध्वाऽनुमतिं निःशब्दां राजमातुः दृष्ट्वा तौ भावतीव्रया दृष्ट्वा क्षणमात्रं ततः सतिरस्कारं गताया अन्यत्र ।

निर्विण्णा अपि अनुपलभ्य बहुप्रतीक्षितां साहाय्यसम्पदं कोल्हापुर-नरेशस्य, निराशा अपि साक्षात्कृत्य स्वां दीर्घकालिकप्रतिकारयोजनां स्वदेशबांधवैरेव तथा विनाशितां, अभिज्ञा अपि प्रतिक्षणं समीपतरं समुपसर्पतः पराजयस्य....ते शूरा देशभक्तः कित्तूरसैनिकाः, प्रेर्यमाणाः साक्षाद्वीरलक्ष्म्या धृतविग्रहया राजमात्रा चेन्नम्मया,....आ मध्यरात्रं प्राणान्तिकं प्रतिकारं चक्रुः....दुर्निवारवेगं दुर्गान्तः सर्वतः प्रविशतां, प्रविश्य सर्वत्र प्रसरतां, प्रसृत्य च सर्वं विनाशयतां अंशावताराणामिव कृतान्तस्यांग्लसैनिकानाम् ।

महति प्रत्यूषे च राजमाता चेन्नम्मा तुरंगमारुढा संततजागरणाऽऽ-रक्तलोचना महिषासुरमर्दिनीव भीषणदर्शना रक्तारक्तखड्गहस्ता....अवलोक्य

स्वं सैन्यं हतप्रायं....सहसा निश्चिकाय निःसर्तुं दुर्गात् सह पौत्रेण स्नुषया वीराव्वयाऽवशिष्टैश्च सैनिकैः अंधतमसे प्रातःकालिके, निःसृत्य शरणीकर्तुं संगोल्लीविपिनं नातिदूरवर्ति, शरणीकृत्य तत् कर्तुं तत्र वेषपरिवर्तं निर्गन्तुं तस्मात् प्रदेशात्, निर्गत्य मेलितुं कोल्हापुरनरेशसैन्येन सह, मिलित्वा च कल्पयितुं भाविकालिक-प्रतिकारयोजनाः ।

निश्चित्य चैवं निःससार सहसा उदक्प्राच्यात् दुर्गद्वारात्....तडिदिव मेघपटलात् ।

न तु शशाक यथाऽभीष्टं कर्तुम् ।

कर्णे दष्टा इव केनापि देशद्रोहिणा तन्निश्चयविषये....अकस्मात् पुरतस्तस्याः प्रादुर्बभूवः अस्पष्टाकृतयः....धृतमानवविग्रहा खण्डा इव नैशतिमिरस्य....समुद्यतखड्गाः निर्निमेषं तामेवावलोकयमानाः सकुत्सं स्मयमाना असंख्याः रिपुसैनिका अश्वारूढाः ।

उपसर्पन्तश्च....तां शनैः शनैः परिवव्रुरपरस्मिन्नेव क्षणे ।

बंदीचक्रुश्च तां प्राणान्तप्रतीकारोद्यतां समुद्धृतखड्गां....अनपेक्षित-कपटप्रहारलूनशस्त्राम् ।

'बन्दीचक्रश्च....मां....', घर्घरस्वरमवदत् शयननिपतितैव राजमाता चेन्नम्मा....निष्पलकं पूर्ववद् ध्यायन्ती संमुखीनकाराकक्षभित्तौ भीषणतरं नृत्यतीः छायाः....विवर्णतरा ।

'मां....धुलप्पागौडस्य प्राणप्रियां कन्यकाम् ।....मां....परमप्रतापिनः मल्लसूर्यस्य स्वातंत्र्यप्राणस्य प्राणप्रियां बल्लभाम् ।....मां....शिवलिंगरुद्र-सूर्यस्य प्राणाधिकां मातरम् ।....मां....कित्तूरप्रजाजनानां समादरणीयां मातरम् ।....बन्दीचक्रुः मां हठात् ।....प्रसह्य!....निगडय्य मम हस्तपादम् । .....चिक्षिपुः मां....तिरस्कृतां उपहासगर्भैः वचनैः....अपमानितां अपशब्दैः....

काराकक्षे....स्वे एव दुर्गे ।....ललुण्ठुः मम समक्षं....अपारं शासकीयं कोषागारं....ऐश्वर्यमण्डितं राजप्रसादाम्....अलुण्ठितपूर्वं कित्तूरदुर्गं.... समृद्धशालिनीं कित्तूरनगरीम् ।....चिक्षिपुश्च अन्ते मां....अपनीय बलात्ततः.... अस्मिन् काराकक्षे....प्रतीक्षितुं....प्रतिक्षणं समीपतरं समुपसर्पन्तं कृतान्तम् । ....एकाकिनीम् ।....एकाकिनीम् ।

'बंद्रीचक्रुः माम्?'-सहसां उज्जगाद....पुनरागतचैतन्यज्योतिरिव हठात् प्रयतमाना उत्थातुं शयनात् ।

अपारयन्ती च तथा कर्तुं....शयनपतितैव सावेशं जगाद....निध्यायन्ती अलातज्योतिः प्रतिक्षणं क्षयिष्णु -

'न....न....बन्दीचक्रुः....एतत्....अभिशप्तं....शरीरहतकं,....बन्दीचक्रुः इमम् असहायं देहम् ।....न माम् ।....न माम् ।

'(साभिमानम्) अहन्तु....सर्वदैव स्वतंत्रा आसम्....अस्मि....स्यां च । सर्वदैव स्वतंत्रा ।....भीषणतमाभिरपि विपत्तिभिरबाधिता ।....मल्ल इव । मम प्राणेश्वर इव ।'

'(सकाकु) न किम् अहं तथा....मल्लः?....(रुष्टेव) किमिति हससि एवम्?....देहि मे प्रत्युत्तरम्!....एवम्!....(चकितेव) किं वदसि?....अपेहि! ....न प्रतिष्ठास्यामि!....न....न....प्रतिष्ठास्यामि!....अयमेव मे स्वर्गः!.... अयं भारतवर्ष एव! त्यक्त्वा इमं पारदास्यगर्ते निमज्जतं....स्वर्गमपि गन्तुं नोत्सहे ।'

'अपि च - (सखेदम्) अकृतकार्या....अननुष्ठितकर्तव्या....अहं स्वं....मुखकमलं....ताताय दर्शयितुं नोत्सहे ।....(सनिर्वेदं) मया हि.... यावच्छक्यं प्रयतमानयाऽपि....न मोचितो मम भारतवर्षः....श्वेतनक्रमुखात् ....अस्मिन् जन्मनि । तत्....जन्मान्तरे प्रयतिष्ये तन्मोचनार्थम् ।'

'तस्मिन्नापि जन्मनि विफलप्रयत्ना....अन्यस्मिन् ।'

'(सोत्साहम्) एवं....अनेकजन्मसंसिद्धा एव परां सिद्धिं यास्यामि'। 'एवमेव....तु....भगवान् आह....स्वयम् ।' 'न किं? मल्ल?....(सोत्साहं) मल्ल! त्वमपि तु मया सहैव भविष्यसि....सदा....अस्यां अनेकजन्मदीर्घदीर्घतरायां यात्रायाम् ।....मया सह....!' 'उभौ....अपि....आवां....प्रयतिष्यावहे....अन्यैः देशबांधवैः सह.... भारतवर्षमिमं....चिरविनष्टं अस्य स्वातन्त्र्यं पुनरपि लंभयितुम् ।' 'मल्ल!....मल्ल!....शृणु....शृणु....विस्पष्टं श्रुतिपथमायान्तीं आवयोः देशबान्धवानामिव रणगर्जनां 'हर हर महादेव!....अल्लाहो अकबर!.... (एकाग्रतरचितमेव)....इमां चास्पष्टां 'भारत माता की....।'

'(सावेगं) पश्य! पश्य!....मल्ल!....इमं....इमं....महान्तं....सशस्त्रं भारतीयजनसंदोह....उद्वेल्लन्तं....बहिरिव....कस्यचित् महतः स्थलदुर्गस्य!.... (एकाग्रतरचित्तेव) इमं च....तथैवं महान्तं (साश्चर्यं)....परंतु....परंतु....विनीतं ....निःशस्त्रं....शान्तेन मनसा अनुयान्तं....कंचित्....धवलवस्त्रधारिणमिव महात्मानं....उद्वेल्लन्महासागरतीरमिव समुपसर्पन्तम् !' '(सौत्सुक्यं)...किं....किं वदसि?....किम्....एते....भाविकाल-गह्वरात्....?' 'आम्!....मल्ल!'-दृढस्वरं जगाद साऽकस्मात्, 'इयम्....इयम् आगच्छामि!....सह त्वया....सह त्वया....प्रवेष्टुं तस्मिन्....।' प्रायतत बलादुत्थापयितुं स्वं शरीरं शयनात् । पपात च क्षणमात्रानन्तरं उत्फ्कुतप्राणा । 'हुकुम्डेर'-चुक्रोश च तीव्रस्वरं....कारागृहरक्षकाणामन्यतमः....सहसा संजातशंकः....अवलोक्येव आकृतितृयमिव किमपि कारागृहान्निःसरत् -अज्ञः नैरर्थक्यस्य....आह्वानस्य स्वस्य !

॥ इति ॥

# संस्कृतभाषा के विद्वान पुरुष डॉ. श्रीनाथ हसूरकर - एक परिचय

सन् १९२४ में इन्दौर संस्कृत महाविद्यालय के प्राचार्य पं. श्रीपाद शास्त्री हसूरकर के यहाँ जन्मे श्रीनाथ को संस्कृत प्रेम विरासत में ही मिला । पिता के सान्निध्य के सुफल स्वरूप उन्हें पारम्परिक भारतीय इतिहास और संस्कृति की मूलाधार प्राचीन भाषा व पद्धति का बोध हुआ जबकि स्व-प्रयत्नों से उन्होंने संस्कृत की क्रमागत विकसित हुई आधुनातन भाषा, शैली एवं साहित्य का ज्ञानार्जन किया । प्राचीन एवं नवीन शैली के इस ज्ञान संगम ने उन्हें परिष्कृत दृष्टिकोण प्रदान किया, जो आगे चलकर संस्कृत में उपन्यास शैली के विकास का मूलाधार बना । संस्कृत में स्नातकोत्तर उपाधि लेने के बाद हसूरकर ने साहित्याचार्य की उपाधि पाई । तत्पश्चात् बनारस हिन्दू विश्वविद्यालय से आचार्य नरेन्द्रदेव के उपकुलपतित्व में 'अद्वैत वेदान्त पर वाचस्पति मिश्र की टीका' पर एक शोध-ग्रन्थ लिखा और इस आधार पर पी.एच.डी. की उपाधि प्राप्त की । इसके बाद डॉ. हसूरकर ने संस्कृत भाषा के विकास का सङ्कल्प लेकर म.प्र. महाविद्यालयीय शिक्षा सेवा में संस्कृत के प्राध्यापक के रूप में अध्यापन कार्य शुरू किया । ३४ वर्ष की अल्पायु में उन्होंने पण्डित रविशंकर शुक्ल की प्रेरणा से रायपुर में दूधधारी संस्कृत महाविद्यालय की स्थापना में अहम् भूमिका अदा की और इसके संस्थापक प्राचार्य बने । शिक्षा वर्ष १९६८-६९ में स्नातकोत्तर कालेज के प्राचार्य के रूप में पदोन्नत होने पर पहले शहडोल, धार और उसके बाद सन् १९८२ में सेवानिवृत्ति के बाद वे यहीं के होकर रह गए और यहीं उन्होंने अंतिम सांस ली । डॉ. हसूरकर ने लेखन-कार्य की शुरुआत

शोध-पत्रों से की । सन् १९५७ में आन्ध्रप्रदेश के तिरूपति में आयोजित प्राच्य भाषाओं की अन्तर्राष्ट्रीय सभा में शरीक होकर हसूरकर साहब ने संस्कृत का एक शोधपत्र पढ़ा और सबको प्रभावित किया । इसके बाद १९६६ तक देश के विभिन्न हिस्सों में आयोजित अनेकों राष्ट्र-स्तरीय कान्फ्रेसों में शोध-पत्रों का वाचन कर उन्होंने अपनी धाक जमाई । इस दौरान उन्होंने अंग्रेजी में भी लेखन किया और पन्द्रह शोध-निबंध लिखे । चालीस वर्षों की आयु के बाद डॉ. हसूरकर शोध-कार्य से हटकर संस्कृत साहित्य में नवीन सृजन की ओर प्रवृत्त हुए, क्योंकि इस मुकाम पर उन्हें महसूस हुआ कि संस्कृत लेखन में अमूमन पुरानी रचनाओं, टीकाओं एवं उपलब्ध साहित्य का विश्लेषणपरक दृष्टिकोण के हावी रहते नवीन सृजन नहीं हो पाता। उन्होंने यह भी देखा कि संस्कृत साहित्य पद्य प्रधान ही रहा है और गद्य काव्य का 'उपन्यास' नामक भेद संस्कृत में प्राय: शून्य के बराबर है ।

इस अभाव की पूर्ति के लिए हसूरकर साहब ने संस्कृत भाषा की बेहतरी के लिए लेखन में नवीन प्रयोग का फैसला किया, जिसके नतीजे के रूप में संस्कृत साहित्य में दुर्लभ उपन्यास विधा की रचना-प्रक्रिया की सार्थक शुरुआत हुई ।

नवीन सृजन के अपने प्रथम प्रयास के रूप में डॉ. हसूरकर ने 'अजातशत्रु' और 'प्रतिज्ञापूर्ति' नामक दो संस्कृत उपन्यासों की रचना की । ६ठीं ई.पू. सदी में घटित मगधराज बिम्बसार और तत्पुत्र अजातशत्रु के बीच हुए कलह पर आधारित 'अजातशत्रु' को श्रीलालबहादुर शास्त्री केन्द्रीय संस्कृत विद्यापीठ नई दिल्ली ने प्रकाशित किया जबकि आर्य विद्वान् चाणक्य एवं मगध सम्राट् धननंद के परस्पर संघर्ष पर आधारित रोचक उपन्यास 'प्रतिज्ञापूर्ति' उ.प्र.संस्कृत अकादमी लखनऊ

ने प्रकाशित किया । इसके पूर्व उनके शोधप्रबन्ध का भी प्रकाशन हो चुका था ।

डॉ. हसूरकर के उक्त दोनों उपन्यास की विद्वज्जनों के बीच बहुत लोकप्रिय हुए । इस सफलता से प्रोत्साहित होकर उन्होंने ब्रिटिश साम्राज्य के निरन्तर प्रसार के खिलाफ रानी चेन्नम्मा द्वारा किये गए साहसी प्रतिकार की कथा को आधार बनाकर अपना तीसरा संस्कृत उपन्यास 'चेन्नम्मा' लिखा । यह कृति म.प्र. संस्कृत अकादमी की पत्रिका 'दूर्वा' में धारावाहिक रूप से प्रकाशित हुई ।

इसके बाद भी डॉ. हसूरकर की लेखन प्रक्रिया अनथक रूप से जारी रही और उन्होंने 'सिन्धु-कन्या' के रूप में संस्कृत साहित्य को एक बहुत ही महत्त्वपूर्ण एवं अविस्मरणीय कृति का उपहार दिया। अरब मुहम्मद बिन कासिम के सिन्धु विजय अभियान के दौरान बहादुर 'सिन्धु कन्या' देवल देवी द्वारा किये गए प्रभावी प्रतिकार के इस रोमांचक कथानक को १९८२ में भारत सरकार के शिक्षा एवं समाज कल्याण मंत्रालय द्वारा प्रदत्त आर्थिक अनुदान के सहयोग से खुद हसूरकर साहब ने ही प्रकाशित किया । उल्लेखनीय है कि संस्कृत साहित्य की इस अनुपम कृति के मुद्रण का गौरव नीमच के ज्ञानोदय मुद्रणालय को प्राप्त हुआ ।

''सिन्धुकन्या'' के प्रकाशन का समय ही डॉ. हसूरकर शासकीय सेवा से निवृत्त हो गए लेकिन वृद्धावस्था और स्वास्थ्यगत परेशानियों के बावजूद लेखन से निवृत्त होना उन्होंने कबूल नहीं किया । साठ वर्ष की अवस्था में उन्होंने मोहम्मद गजनवी के आक्रमणों के घटनाक्रमों को आधार बनाकर संस्कृत उपन्यास 'दावानल' की रचना की । यही उपन्यास हसूरकर साहब की अन्तिम रचना सिद्ध हुई। उम्र के दबाव और क्षीण स्वास्थ्य ने लेखन के कठिन श्रम को आगे

जारी रखने की इजाजत नहीं दी । ६४ साल की उम्र में संस्कृत साहित्य की परम्परागत जमीन तोड़कर सृजन के नये उपन्यासों के कथानक का आधार ऐतिहासिक घटनाओं को बनाया, परन्तु उनमें नीरसता कहीं नहीं है । उन्होंने देश के अतीत की घटनाओं को सर्वथा नये अन्दाज में प्रस्तुत किया । भारतीय नारी चरित्र में सन्निहित गरिमा तथा ओज और स्वाभिमान की रक्षा के लिये प्रकट हुए पराक्रम को डॉ. हसूरकर ने "रानी चेन्नम्मा" और "सिन्धुकन्या" में बहुत प्रभावकारी ढंग से चित्रित किया है ।

डॉ. हसूरकर साहब की कृतियों में कथावस्तु सम्बन्धी सौष्ठव, रोचकता, सामाजिक जीवन-चित्रण, विलक्षण स्वाभाविकता, सर्वदा नवीन कल्पनाओं से सजा प्राकृतिक चित्रण, रचनात्मक गहराई एवं सामाजिक सरोकार आदि अनेक विशिष्टताएँ रहीं हैं, जिनकी वजह से पाठक अपना स्वत्व भुलाकर उपन्यासों की विषयवस्तु के साथ एकाकार हो जाता है ।

डॉ. हसूरकर की रचनाओं में भाषा की विशिष्टता उल्लेखनीय है । देखा जाए, तो संस्कृत साहित्य में अधिकांशत: रचनाकारों पर भाषा हावी रही है परन्तु श्री हसूरकर की रचनायें इसका अपवाद कही जायेंगीं । उन्होंने संस्कृत को बस माध्यम ही रहने दिया है। उनकी रचनाओं में प्रयुक्त संवेदनशील, ओजमयी एवं विषयानुकूल भाषा रचनागत भावों को पाठकों तक प्रेषित करते में पूरी तरह समर्थ रही है, पर वह कहीं भी भाषा की सहज गति को खण्डित नहीं करते । डॉ. हसूरकर मानते थे कि संस्कृत एक सहज, समर्थ एवं जीवित भाषा रहीं है । उनका मानना था कि सरल भाषा में पठनीय सामग्री के लेखन से ही संस्कृत को लोकप्रियता मिल सकती है । अपने लेखन में उन्होंने निष्ठापूर्वक यही प्रयास किया ।

डॉ. हसूरकर साहब की रचनाओं तथा संस्कृत के विकास में उनके योगदान का यद्यपि अभी मुकम्मल मूल्याङ्कन नहीं हो पाया है तथापि साहित्य मर्मज्ञों ने उनकी प्रतिभा को सलाम किया है । उ.प्र. संस्कृत साहित्य अकादमी ने उनके ''प्रतिज्ञापूर्ति'' उपन्यास को बाणभट्ट पुरस्कार से सम्मानित किया । नई दिल्ली में १९८५ में आयोजित एक विशेष समारोह में प्रधानमन्त्री श्री राजीव गांधी ने डॉ. हसूरकर को यह पुरस्कार प्रदान किया था । अपने सम्मोहनपूर्ण साहित्य, स्वाभाविक प्रवाह, चरित्र की चित्रात्मकता और प्रभावी रूप-विन्यास के आधार पर 'सिन्धुकन्या' उपन्यास को समकालीन संस्कृत साहित्य की अनुपन देन ठहराते हुए १९८४ में साहित्य अकादमी के द्वारा राष्ट्रस्तरीय पुरस्कार से सम्मानित किया गया । २५ फरवरी १९८५ को नईदिल्ली में अकादमी के अध्यक्ष प्रो. विनायक कृष्ण गोकाक ने डॉ. हसूरकर साहब को यह पुरस्कार प्रदान किया ।

मध्यप्रदेश के इस विद्वान् सपूत को अपने प्रदेश में भी उल्लेखनीय मान मिला । सन् १९८५-८६ में जब मध्यप्रदेश संस्कृत अकादमी की स्थापना की गई तब डॉ. हसूरकर साहब को उसका मानद सदस्य बनाया गया । इसके अलावा संस्कृत साहित्य में उपन्यास विद्या को प्रोत्साहित कर उनके द्वारा दिए गए विशिष्ट योगदान को सम्मानित करने के लिए म.प्र. संस्कृत अकादमी ने उनको सारस्वत सम्मान से विभूषित किया । डॉ. हसूरकर ने अपने जीवन काल के अन्तिम दिनों में म.प्र. संस्कृत अकादमी को संस्कृत साहित्य के विस्तार और उसके प्रकाशन में आने वाली कठिनाईयों के निवारण हेतु अनेकों महत्त्वपूर्ण सुझाव दिये थे ।

डॉ. हसूरकर का व्यक्तित्व इस कदर सहज, सरल, सादगीपूर्ण एवं आडम्बर रहित था कि नीमच शहर की बात तो जाने दीजिये

जिस शासकीय स्नातकोत्तर महाविद्यालय से सेवा निवृत्त होने के पूर्व वे चार साल प्राचार्य रहे, उसके अधिकांश छात्रगण भी उनके उच्चस्तरीय विद्वत्ता के स्वरूप को नहीं जान पाए । बिल्कुल ऋषितुल्य सुमधुर व्यक्तित्व था उनका । वह प्रचार से हमेशा दूर रहे । साहित्य अकादमी का पुरस्कार मिलने पर जब नीमच के कुछ पत्रकारों ने उनसे भेंटवार्ता लेनी चाही तो उन्होंने विनम्रता से इन्कार कर दिया।

संस्कृत भाषा के प्रति पूर्णतया समर्पित डॉ. हसूरकर साहब यह चाहते थे कि युवा पीढ़ी संस्कृत को जटिल मानकर इससे परहेज करने की मानसिकता त्यागे । उनका मानना था कि संस्कृत के इतिहास में देश के गौरवपूर्ण अतीत की तस्वीर झलकती है और बगैर इसको पढ़े हम राष्ट्र के धर्म, संस्कृति और आत्मस्वरूप को ठीक से नहीं जान सकते । देवभाषा संस्कृत को ऐसे निष्काम, निष्कपट, कर्मठ एवं समर्पित कर्मयोगी भक्त का सदैव इन्तजार रहेगा ।

सुभाष ओझा,
पत्रकार, दैनिक नई विधा
नीमच (म.प्र.)

# आधुनिक साहित्य सृजन में संस्कृत भाषा की प्रासङ्गिकता एवं संभावनायें

आदरणीय अध्यक्ष महोदय एवं विद्वज्जन,

इस संगोष्ठी में मुझे सृजनशील आधुनिक संस्कृत लेखक के अनुभवों पर प्रकाश डालने के लिए आमन्त्रित किया गया है ।

इतने गंभीर एवं आत्मकेन्द्रित विषय पर विचार व्यक्त करने के योग्य न होने पर भी मुझे यह कार्य जो सौंपा गया उसे मैं वस्तुत: प्रोत्साहन ही मानता हूँ और उसके लिए इस संगोष्ठी के आयोजकों के प्रति कृतज्ञता प्रकट करता हूँ ।

इधर कुछ-एक वर्षों से आत्मतृप्ति की लालसा तथा गीर्वाणवाणी की सेवा की तीव्र अभिलाषा ने मुझे संस्कृत गद्य, काव्य के क्षेत्र में कुछ-एक उपन्यास लिखने के लिए प्रेरित किया है ।

ख्रिस्तपूर्व चौथे दशक में पूर्वी भारत में घटित आर्य चाणक्य के नन्दवंशीय राजा के हाथों अपमानित होने की घटना पर आधारित "प्रतिज्ञापूर्ति:" यह उपन्यास इनमें पहला है । दूसरा है - "अजातशत्रु:"। यह उपन्यास ख्रिस्तपूर्व छठवे शतक में पूर्वी भारत में ही घटित राजा बिम्बसार के अपने पुत्र अजातशत्रु के हाथों मारे जाने की घटना पर आधारित है । और तीसरा है - "सिन्धुकन्या" । इस उपन्यास की कथावस्तु ख्रिस्तोत्तर १३वीं शताब्दी के प्रभाव काल में घटित मुहम्मद बिन् कासीम के सिन्धु विजय तथा सिन्धुकन्या देवलदेवी के प्रतिशोध की घटनाओं को लेकर गुम्फित की गयी है । ये उपन्यास प्रकाशन के मार्ग पर हैं । तथा इनमें से दूसरा, अर्थात् अजातशत्रु:, जबलपुर विश्वविद्यालय के संरक्षण में निकलने वाली

“ऋतम्भरा” शोध पत्रिका के नवीनतम अंक में आंशिक रूप से प्रकाशित हो चुका है ।

ये उपन्यास कैसे बन पड़े हैं - यह तो आप विद्वान रसिक स्वयं ही यथासमय तय करेंगे । मैं तो “आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्” की संकोचभरी मनोवृत्ति लेकर, इन उपन्यासों को लिखते समय, मुझे लेखक के नाते जो अनुभूतियाँ हुई उन्हें आपके सन्मुख प्रस्तुत करने का घाष्टर्य कर रहा हूँ ।

लेखक के नाते मैंने यह प्रयोग किया है कि उपन्यास की कथा वस्तु घिसे-पिटे पौराणिक आख्यान तथा रामायण-महाभारत के उपन्यासों से सर्वथा ऐतिहासिक अथवा अर्ध-ऐतिहासिक स्वभाव की हो । और इस प्रयोग में मैंने संस्कृतभाषा के माध्यम को सर्वथा अनुकूल ही पाया है । दूसरे शब्दों में मैंने यह अनुभव किया है कि परम्परागत कथाओं के चित्रण में संस्कृत भाषा जितनी स्वाभाविक लगती है, उतनी ही ऐतिहासिक किंवा अर्ध-ऐतिहासिक कथाओं के वर्णन में भी । भाषा की यह अनुकूलता, माध्यम की यह स्वाभाविकता, क्या वैसी ही बनी रहेगी यदि हम उसका आधुनिकतम जीवन से संबद्ध कथाओं के कथन में भी उपयोग करने की चेष्टा करेंगे - यह मैं निश्चितरूप से नहीं कह सकता । क्योंकि मेरी वैयक्तिक अभिरूचि अत्याधुनिक कथावस्तुओं को संस्कृत उपन्यास का शरीर देने की ओर अभी तक नहीं गयी । हो सकता है - सक्षम वागीश्वर के द्वारा प्रेरित होने पर यह गीर्वाणवाणी “न्यूल्कीय विस्फोट” “ग्रहातीत मानव प्रवास” “जन्तु युद्ध” जैसी अत्याधुनिक घटनाओं से भरे हमारे आजकल के जीवन को भी उतनी ही स्वाभाविकता से अभिव्यक्त करें, जितनी स्वाभाविकता से उसने हर्ष के जीवन को किया ।

लेखक के नाते मैंने दूसरा यह प्रयोग किया है कि उपन्यास

में आने वाले प्रत्येक स्त्री का, पुरुष का, बालक का, वृद्ध का स्वभावचित्र ऐसा हो जो कि एकदम स्वाभाविक हो और कथावस्तु का परिपोषक हो । दूसरे शब्दों में मैंने यह प्रयास किया है कि नायक, प्रतिनायक, नायिका आदि पात्रों के चरित्र चित्रण की परम्परागत पद्धति का सर्वथा त्याग कर एकदम चरित्र चित्रण की आधुनिक एवं वास्तविक पद्धति अपनायी जाये । इस प्रयोग के फलस्वरूप मैंने यह अनुभव किया कि संस्कृतभाषा परम्परागत चरित्रचित्रण में कितनी उपयोगिता की प्रतीत होती है, उतनी ही आधुनिक चरित्र चित्रण में भी । दूसरे शब्दों में सर्वथा भिन्न-भिन्न प्रकारों के पात्रों के स्वभावों की बारीकियाँ को, एक ही पात्र के स्वभाव में स्थल-काल परिस्थितिवश आने वाले चढ़-उतारों को, एक ही पात्र के स्वभाव में उठने वाले भावना संघर्षो को संस्कृतभाषा का माध्यम उतनी ही स्वाभविकता से प्रकट कर सकता है, जितनी स्वाभाविकता से वह, परम्परा का अनुसरण करता हुआ, एक ही लीक पर चलने वाले पात्र स्वभावों का चित्रण करता था ।

लेखक के नाते यह अनुभव किया कि संस्कृतभाषा में "दृश्योद्भावनशक्ति" उतनी ही मात्रा में विद्यमान है जितनी कि संसार की लचीली भाषा में है । न जाने किस कारण से - संस्कृत भाषा की इस शक्ति का उद्बोधन प्रचीन संस्कृत लेखकों ने उतने व्यापक और स्पष्ट पैमाने पर नहीं किया, जितना किया जाना चाहिए था । हमारे प्राचीन वागीश्वरों ने लम्बे लम्बे वर्णन तो अपनी कथा-आख्यायिकाओं में जरूर गुंफित किए हैं । लेकिन मैं विनम्रता से कहना चाहूँगा, ऐसा करते समय उनका ध्यान जितनी मात्रा में अपने भाषाप्रभुत्व के प्रदर्शन की ओर, श्लेष-यमकादि कठिन अलंकारों के प्रयोग की ओर रहा करता था । उतनी वाचक के कल्पनानेत्रों के

सामने वर्ण्यवस्तु का यथार्थ एवं स्पष्ट चित्र खड़ा करने की ओर नहीं । अर्थात् इस सामान्य विधान के अपवाद हैं । और वे सर्वथा अभिनंदनीय भी हैं । फिर भी उपर्युक्त सामान्य विधान सत्य है - यह प्रत्येक निष्पक्ष वस्तुनिष्ठ दृष्टि रखनेवाला, संस्कृत साहित्य का विद्यार्थी स्वीकार ही करेगा । लिखते समय मैंने अनुभव किया कि यह तत्कालीन संस्कृत लेखकों की, परम्परा से जकड़ी हुई लेखन शैली का ही परिणाम है । स्वयं संस्कृतभाषा में ऐसी अपारशक्ति है कि वह प्रतिप्रसंग अनूठे, रंगीन, रमणीय अथवा भीषण मानव कथा के अनुकूल अथवा प्रतिकूल प्रतीत होने वाले नैसर्गिक दृश्यों को सहज ही में चित्रित कर सकती है और प्रत्येक संवेदनशील वाचक के कल्पना नेत्रों के सामने उन्हें खड़ा कर सकती है ।

लेखक के नाते मैंने अनुभव किया कि जितना अभिव्यक्ति-सामर्थ्य संस्कृतभाषा में है, उतना शायद किसी भी प्राचीन अथवा अर्वाचीन भाषा में नहीं है । सूक्ष्म अथवा स्थूल चेष्टाओं को अस्पष्ट अथवा स्पष्ट भावनाओं को विविध प्रसंगों को व्यक्त करने के लिए सिद्ध शब्दों की अपार संपदा उसके पास पहले से ही है । खेद की बात यह है कि पारतंत्र्य के ठीक पहले तथा पारतंत्र्य के दौरान संस्कृत लेखक की प्रतिमा रुढ़ियों से, तथाकथित कवि समयों से, जकड़ती चली गयी, और अन्त में, परिणामस्वरूप, ऐसे असंख्य शब्द, किसी के भी द्वारा न छेड़े जाने के कारण शिथिल पड़ने वाले वीणा के तारों के समान, जंग खा खा कर कोषों में निष्प्राण पड़ गये । अगर आधुनिक संस्कृत लेखक ('अप्रयुक्त' दोष के आरोपों को स्वीकार कर) इन शब्दों के समुचित प्रयोग का साहस कर दिखाये तो कोई वजह नहीं कि ये शब्द फिर से प्राणवान् होकर अभिव्यक्ति करने न लगें । इससे भी बढ़कर कौतुक की बात यह है कि संस्कृत

लेखक असंख्य नए शब्द गढ़ सकता है और उनको प्रयोग में ला सकता है । संस्कृतभाषा की यह उर्वरता अन्य भाषाओं में क्वचित् ही पायी जा सकती है । उतना सामर्थ्य विधाता से न मिलने के कारण मैं संस्कृतभाषा की इस उर्वरता का नहीं के बराबर उपयोग कर पाया हूँ । लेकिन भाषा के स्वाभाविक सामर्थ्य का पूरा अहसास सौभाग्य से मुझे हुआ है । और उसे ही मैंने विद्वज्जनों के सामने प्रस्तुत किया है ।

लेखक के नाते मैंने अनुभव किया कि संस्कृतभाषा में रसाभिव्यक्ति का अपार सामर्थ्य है - खासकर शृंगार, करुणा, भयानक आदि रसों की कोमलतम एवं कर्कशतम छटाएं इस भाषा के माध्यम से प्रकट की जा सकती है । दुर्भाग्य से वीररस की भी अभिव्यक्ति इतनी सहजता से तथा नवीनता से इस भाषा के माध्यम से हो सकती है - ऐसा मेरा अनुभव नहीं कह पाता है । वीररस की अभिव्यक्ति उन्हीं घिसे-पिटे तरीकों से - जो कि न जाने कितने युगों से चले आ रहे हैं, करने को जी नहीं चाहता । और नए तरीके इजाद नहीं हो पाते, चूंकि समयानुसार युद्धों के प्रकार, उनके साधन आदि सभी बदल चुके है, और उनके लिए उपयुक्त शब्द तथा प्रतीक संस्कृत भाषा में उपलब्ध नहीं है, बल्कि विश्वास है, कि समर्थ वागीश्वर के हाथों में आकर संस्कृतभाषा का माध्यम वीररस की अभिव्यक्ति बदली हुई परिस्थितियों के संदर्भ में भी उतनी ही सहजता से करें जितनी कि पौराणिक काल में वह किया करता था ।

संक्षेप में - समयानुसार आवश्यक परिवर्तन कर अगर संस्कृतभाषा के माध्यम को ललित साहित्य के लेखन के हेतु अपनाया जाय तो वह न केवल संतोषप्रद साबित होता है, अपितु अन्यान्य भाषाओं के माध्यमों से बेहतर उतरता है । यह वैयक्तिक अनुभव है ।

आवश्यकता है - उसमें अपेक्षाकृत सरलता लाकर, तथाकथित कविसमयों के प्राणलेवा बंधनों से उसे मुक्तकर, उसके साहसपूर्ण प्रयोग की । पुराने घिसे-पिटे पौराणिक कथानकों को छोड़कर, अगर मनोरंजन नवीन ऐतिहासिक, अर्ध-ऐतिहासिक अथवा सामाजिक कथावस्तुओं को अपनाया जाय, धीरोदात्त, धीर ललित आदि नायक भेदों, मुग्धा-प्रौढ़ा आदि नायिकाभेदों पर आधारित शास्त्रोक्त स्वाभावचित्रण को तिलाञ्जलि देकर वास्तविक स्वभाव चित्रण को यदि अंगीकारा जाय, मानव-जीवन से सहानुभूति अथवा तटस्थता अथवा विरोध रखने वाले प्राकृतिक दृश्यों को यदि उपयुक्त स्थानों पर चित्रित किया जाय तो संस्कृतभाषा लेखक के सूक्ष्म मनोभावों को अभिव्यक्त करने वाला, वाचक के मन में हल्के से प्रगाढ़ तक रसों का परिपोष्ज करने वाला, सशक्त प्रभावशाली माध्यम बन सकती है । ऐसा विश्वास मेरा तुच्छ अनुभव मुझे दिलाता है ।

- डॉ. श्रीनाथ श्रीपाद हसूरकर